**तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वय-वादिनां मतम् ॥ वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः ।**

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ॥**

**तत्र वाच्यस्य यथा**

**माए घरोवअरणं अज्ज हु णत्थि त्ति साहिअं तुमए ।**
**ता भण किं करणिज्जं एमे अ ण वासरो ठाइ ॥६।**

( गा. स. वे. ८८६ )

---

"आकाङ्क्षा सन्निधानञ्च योग्यता चेति तत्त्रयम् ।
सम्बन्धकारकत्वेन क्लृप्तन्नानन्तरश्रुतिः ॥ ( त. वा. ४३६पृः )

तथा— यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन सः ।
अर्थतो ह्यसमानानामानन्तर्यमकारणम् ॥

अपि पश्यामि धावन्तं दूरे यान्तं वनस्पतिम् ।
त्वां ब्रवीमि विशालाक्षि या पिनष्टि जरद्गवम् ॥ इति"[2]

( शवरभाष्ये ४।३।११ )　　　　( रु. सं. ५पृः )

एतत्त्रितयसहकवि-(कारि) चकव्यावर्तिता शब्दस्यार्थावगमनशक्तिस्तात्पर्यम् । समभिव्याहृ-(12b)तपदार्थसंस्पर्धा-(सर्गा-)त्मकश्चा(काचा)स्य पृथगेव विषयः । शुद्धो हि स्वार्थः पदसङ्केतगोचरः । अतएव वाक्यार्थ(र्थे) लक्षणेति भ्रान्तमतमपास्तम् । जात्यादयो वक्ष्यमाणरूपाः **पदार्थास्**तेषां **समन्वये** कर्तृकर्मक्रियाव्यापारे **विशेषवपुः** संसर्गाधिकवाक्यार्थ-शरीरः । **अपदार्थोऽपीति** केवलपदागम्यः । अनन्वितानामभिधानं पश्चादन्वयप्रतीति-रिति वादिनस्तौतातितादयः । **वाच्य एवेति** प्रयोगपतितानामावापोद्वापाभ्यां शक्तिग्रहणं

---

2　भावत्रातकृतकौषितकीगृह्यसूत्रविवरणे ( Adyar Library 39. N. 37 Folio 66 ) 'यस्य स्याद्येन···अर्थतो ह्यसमर्थाना'मिति प्रथमश्लोके पाठः । वात्स्यायनीयन्यायभाष्ये ( १।२।६ ) 'यस्य येनार्थसम्बन्धः' 'अर्थतो ह्यसमर्थाना'मिति च पाठान्तरम् । द्वितीयश्लोके पिनष्टीत्यत्र पिनक्षीति मुद्रितशावर-भाष्ये पाठः । यान्तमित्यत्र 'यात'मिति रुचकधृतो 'जात'मिति सारसमुच्चय-गृहीतश्च पाठः । या पिनष्टीत्यत्र पिनक्षीति पिनैक्षीति चासङ्गतौ पाठौ क्वचित् ।

**अत्र स्वैरविहारार्थिनीति व्यज्यते।**

**लक्ष्यस्य यथा**

**साहेन्ती सहि सुहअं खणे खणे दूम्मिआसि मज्भ कए।**
**सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए ॥७॥**

( गा. स. वे. ८४. )

---

ततश्च योग्यपदार्थान्तरा-(र अ)न्वित एव स्वार्थे शक्तिर्गृह्यत इति संसर्गात्मको वाक्यार्थः शक्तिगोचर एवेत्य**न्विताभि[धान]वादिनः** प्रभाकरगुरो र्मतमिति सम्बन्धः[3]।

**सर्वेषामि**ति सर्वशब्दो न व्यक्तिकार्त्स्न्यं इत्याह **प्रायश** इत्यादिः, क्वचित् कस्यचिन्नेत्यर्थः। माए (3)' इत्यादि—मातर्गृहोपकरणमद्य खलु नास्तीति कथितं त्वया। तद् भण किं करणीयमेवमेव न वासरस्तिष्ठति[4] ॥ मातरिति सम्बोधनम्। काकुर्विश्वास्यता-माविष्करोति। तथा च मय्युपस्थितायां तव गमनमनर्हमिति व्यज्यते। गृहपदेन भृत्यादि-समुदायस्तस्योपकरणमित्यवश्यसम्पाद्यतां व्यनक्ति। अद्य नास्ति न त्वन्यदा, तेनैतत्क्षण-प्रसक्तत्वादविनयपूर्वरङ्गादिशङ्कानि-(13 a)रासः। ततः सकृद्गमनं न दोषायेति ध्वनति। त्वया शिष्टं न तु मयैवेदमुन्नीतमिति माऽत्वाऽन्यथा शङ्किष्ठा इति प्रकाश[य]ति। भणेति निदेशकारिणी तेऽहं न तु स्वयमेव किञ्चिदाचरामीति द्योतयति। करणीयमिति सम्पादना-र्हम्। अतोऽत्र विमतिं मा विधासीरिति कटाक्षयति। एवमेवेति। उपकरणं विना यादृशी नामास्मदृशा सा वक्तुमपि नार्हतीति प्रत्याययति। इति श्रुतावगतादेवार्थाद्वक्ष्यमाण-सहकारिसमवहितात् स्वच्छन्दविहारार्थिनीत्यर्थोऽवगम्यमानः स्थापयति ध्वननव्यापारम्। **साहेन्ती**त्यादि—'शासती साधयन्ती वा सखि सुभगं क्षणे क्षणे खेदिताऽसि मम कृते। सद्भावस्नेहकरणीयसदृशन्तावद्विरचितं त्वया ॥' शासती मदीयामवस्थां तस्मै कथयन्ती साधयन्ती मयि पक्षपातिनं कुर्वतीत्यर्थः। पदस्वरसः पूर्ववद् गवेषणीयः। अत्र वाच्य--स्यापकारिणो वक्तुश्चापकारसंरब्धस्य पर्यालोचनाद् बाधितमुख्यार्थः शब्दो विपरीतलक्षणया

---

3 आहुरिति शेष इति बहुवचनसम्बन्धं केचिद्दर्शयन्ति। अन्ये त्वत्रैकवचनेन बहुनुग्रहाभावो ध्वनित इति मन्यन्ते।

4 एषु न तावच्छाया प्रदर्श्यते परन्तु तस्या यथायोगं प्रतिवाक्यदिशा विशदन-मपीति ध्वन्यालोकलोचनकारादिभिरनुसृतः पन्थाः। स एवात्राप्याश्रितः। भूयःप्रतीतिरित्यग्रे टीकापाठः क्रियाविशेषणत्वेन समाधेयः।

**अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम्। तेन च कामुक-विषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्।**

**व्यङ्ग्यस्य यथा—**

**उअ णिच्चलणिप्पंदा भिसिणीपत्तम्सि रेहइ वलाआ।**

**णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व ॥८॥** (गा. स. १।४)

**अत्र निस्पन्दत्वेन आश्वस्तत्वम्। तेन च जनरहितत्वम्। अतः सङ्केतस्थान-**

---

कौटिल्य[ान्निः] स्नेहत्वादिकं लक्षयति। स च लक्षितोऽर्थोऽर्थान्तरं प्रकाशयतीति लक्ष्यस्य व्यञ्जकत्वम्। ननु वक्त्रादिपर्यालोचनाद्यदि मुख्यार्थबाधस्तर्हि मूर्धाभिषिक्तेषु "भम धम्मिअ" इत्यादिषु (13 b) ध्वन्युदाहरणेषु मुख्यार्थबाधाद्विपरीतलक्षणाप्रवेशप्रसङ्गः। नैतदिह, यत्र वाच्योऽर्थः कयाचिद् गमनिकया समर्थयितुं शक्यते तत्र तस्य समूलत्वान्न वक्त्रादिविशेष-वशाद्बाधः। केवलं वक्त्रादिविशेषोऽर्थान्तरमेवावगूरयति सत्वागूरितो विरोधान्मुख्यमर्थं यद्यत् सत्यतयाऽवगमयति तस्यान्यत्वं क्वोपयुज्यते, तस्य हि युक्तिवशात् प्ररूढप्रतीतेः सविधान-(ना ?) मेवेति कुतो मुख्यार्थबाधः, कुतो वा लक्षणा ? यत्र तु वाच्यस्य कयाचिद् गमनि-कया समर्थयितुमशक्यस्य वक्त्रादिवशाद् बाध्यतया प्रतीतिस्तत्र मुख्यार्थबाधाल्लक्षणा। "भम धम्मिअ" इत्यादौ वाच्यस्य समर्थयितुं शक्यत्वान्मुख्यार्थबाधाभावे न विपरीतलक्षणायोगः। "साहेन्ती"त्यादौ तु वाच्यस्य समर्थयितुमशक्यत्वाद्वक्त्रादिवशाद्भूषन्नेवान्वयो बाधित इत्यस्ति मुख्यार्थबाधः। सम्बन्धश्चात्र विरोधाभिधं वैपरीत्यमेवेति न किञ्चिदसङ्गतम्। तथा चोक्तम्

"क्वचिद्बाध्यतया ख्यातिः क्वचिदस्य च (क्वचित् ख्यातस्य) बाधनम्।

पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु॥" (रु. सं. ६-७ पृः)

**उअ णिच्चले**त्यादि—उअ पश्य। वाक्यस्यात्र कर्मता। निश्चलनिस्पन्दबिसिनी-पत्रे शोभते वलाका। (14 a) निर्मलमरकतभाजनस्थिता शङ्खशुक्तिरिव॥ निश्चलेति सम्बोधनम्। ग्राह्यमाणोऽपि न भावं गृह्णाति यः स एवमुच्यते। शङ्खशुक्तिर्मुक्ताशुक्तिः। अत्र निस्पन्दत्वेन विश्वासो व्यज्यते, तेन विविक्तता ध्वन्यते, तेन च सङ्केतस्थानमिति व्यङ्ग्यत्रयम्। तत्र पूर्वार्थद्वयप्रतीतावपि न कश्चन चमत्कार(ः)। तृ(प्र)तीय[5]मानार्थ-**भानादेव** काव्यत्वप्रतिलम्भः। अतएव पूर्वो[क्तो]-दाहरणेषु व्यङ्ग्यपरम्परासम्भवेऽपि

---

5 तृतीयार्थभानादेवेत्यपि सङ्गतः पाठः स्यात्।

मेतदिति कयाचित् कश्चित् प्रत्युच्यते। अथवा मिथ्या वदसि, न त्वमत्रा-गतोऽभूरिति व्यज्यते ॥

वाचकादीनां क्रमेण स्वरूपमाह—

**साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः ॥१॥**

इहागृहीतसङ्केतस्य शब्दस्यार्थप्रतीतेरभावात् सङ्केतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः।

**सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।**

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव तथाप्यानन्त्याद्

---

नायं विशेष इत्याशयाविष्कारः। सम्भोगाच्च विप्रलम्भः प्रकर्षवानिति मत्वा पक्षान्तरमाह—**अथवे**ति। व्यापकविरुद्धोपि (प) लब्धे-(ब्धैव)व न त्वं गत इति प्रतीयत इति चेन्न, अनुमानसामग्रीखण्डनस्य करिष्यमाणत्वात्।

एषां [स्व]रूपं वक्ष्यत इत्युक्तं, तस्यायमवसर इत्याह—**वाचकादीना**मिति। **साक्षादि**त्यर्थान्तराव्यवधानेन। **सङ्केतित**मिति वैशेषिकमतानुसारेणाभिधानप्रतिपादनम्[6]। **इहेति** शाब्दे व्यवहारे। **अगृहीतसङ्केतस्य** प्रतिपत्तुरिति यावत्।

**जात्यादि**रिति जातिगुणक्रियाद्रव्याणि। ननु प्रतीतावेव सङ्केतग्रहस्योपयोगः, प्रतीतिश्च प्रवृत्तिनिवृत्तिमात्रोपयोगिनी, ते चेष्टानिष्टसाधनयोरेव, (14b) व्यक्तिश्च तादृशी नोपाधिरिति कथं न चतुर्विधः सङ्केतविषयग्रहः, कथञ्च जातिरेवेत्यत

---

6 "बुद्धिपूर्वा वाक्यकृतिर्वेदे" (६।१।१) इति "पुनर्विशिष्टे प्रवृत्ति"रित (६।१।१०) वैशेषिकसूत्रेषु पाठात्। सङ्केतितमिति वचनव्यक्तिरपरभाषाप्रायेति रुचकमतं यस्य प्रतिध्वनिः साहित्यचूडामणौ "अभिदधातिरत्र शब्दवृत्तिमात्रे प्रतिपादनलक्षणे वर्तते।......इतरथा पर्यायस्यापि लक्षणत्वापत्ति"रिति। ततश्च तत्त्वे निघण्टुपाठादेवाशेषवैशेषिकार्थप्रतिपत्तिप्रसङ्ग इत्यसङ्गतः स्वकपोलकल्पितो विश्लेषणप्रयासः। आदर्शपुस्तके वाक्यस्यास्यादौ "वाचकादीति पक्षान्तरमाह अथवे"ति विसदृशी पूर्वतरवाक्यांशस्यायथा पुनरावृत्तिः।

**व्यभिचाराच्च(द्धा) तत्र सङ्केतः कर्तुं न युज्यत इति गौः शुक्लश्चलो डित्थ इत्यादीनां विषयविभागो न प्राप्नोतीति च तदुपाधावेव सङ्केतः। उपाधिश्च द्विविधो वस्तुधर्मो वक्तृयदृच्छासंनिवेशितश्च। वस्तुधर्मोऽपि द्विविधः सिद्धः साध्यश्च। सिद्धोऽपि द्विविधः पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च।**

---

आह—**यद्यपी**ति[7]। अनुगतरूपपुरस्कारेण शृङ्गग्राहिकया सङ्केतग्रहो वाच्यः। तथाचैकस्यां व्यक्तौ तद्ग्रहेऽपि कथं व्यक्त्यन्तरे प्रयोगः स्यात्? तत्रापि सङ्केतग्रह इति चेत् तर्हि व्यक्त्यन्तरे कथमित्यानन्त्यम्। **व्यभिचाराद्धे**[8]ति "यत्र व्यक्तौ सङ्केतः सा व्यवहारकालं(ले) व्यभिचरति" (रु. सं. ७पृः)। एवञ्च व्यक्ताविव जातावपि प्रतिव्यक्तिभिन्नरूपत्वादानन्त्यव्यवहारो दुष्परिहरः। नहि विद्यमानायामप्याकृतौ गामानयेत्य (ति क-)श्चित् पिष्टमयीं गामानयतीति। ननु जातिपक्षेऽपि जातेः सर्वगतत्वात् किमिति मृद्गविकाऽऽनयनं न भवति? सास्नाऽऽदिमतः प्राणिन एव गोत्वाभिव्यञ्जकत्वात्—इत्यास्तां तावत्। **तत्रे**ति व्यक्तौ। **सङ्केतः कर्तुं न युज्यते** न शक्यत इत्यर्थः। किञ्च यदि व्यक्तिमात्रं सङ्केतगोचरः कथं न घटपदस्य पटे प्रयोगः[9]? अप्रयोगादेवेति चेन्न, प्रयोगसामग्रीसम्भवे तस्य वाङ्मात्रत्वात्। अपि च शृङ्गग्राहिकया सङ्केतग्रहे चैवं व्यक्तिर्गोपदसमयग्रहविषयः, नैव तत्र समानाधिकरणप्रयुज्यमानशुक्लचलशब्दयोश्च विषय इत्यमीषां घटकलसादिवत् पर्या-(15 a)यत्वप्रसङ्ग इत्याह—**गौः शुक्ल** इति। कृतकशब्दवादिनां हि मते पारमेश्वरः सङ्केतः सकललोकव्यवहारानुकूलतया सर्वैरनुगृहीतः। इतरथा प्रकृत्युच्चारणं(णे) प्रयोज्यप्रयोजकपुरुषविप्रतिपत्तौ संव्यवहारलोपप्रसङ्गः, तत एव च जगदादित आरभ्य तथैव प्रवाहाविच्छेदस्याप्युपपत्तिरिति। नित्यशब्दवादिनां मत औत्पत्तिकसम्बन्धग्रहणापरपर्याया व्युत्पत्तिः सङ्केतपदेन विवक्षिता। **उपाधिश्चे**ति, **वस्तुधर्म**स्तल्लब्धा वृत्तिः, **वक्तृयदृच्छासन्निवेशितो** वस्तुषु न वर्तते वक्त्रा तु स्वातन्त्र्येण

---

7 अत्रादर्शपुस्तके किञ्चिद्गलितमिति प्रतिभाति। काव्यप्रकाशदीपिकातोऽत्रालोकपातः क्रियते—**अर्थक्रियाकारितये**ति, अर्थः प्रयोजनं तस्य क्रिया निर्वाहः, वज्राग्निवत् समुदितत्वं कार्याणामिति (३३ पृः)।

8 'व्यभिचाराच्चे'ति मुद्रितपुस्तकेषु पाठः।

9 व्यक्तिविवेके "घटतीति घटो ज्ञेयो नाघटन् घटतामियात्। अघटत्वाविशेषेण पटोऽपि स्याद् घटोऽन्यथे"त्याद्युद्घोषणमेतदभिप्रायकमेव।

तत्राद्यो जातिः। उक्तं हि वाक्यपदीये "न हि गौः स्वरूपेण गौर्नाप्यगौ-गौत्वाभिसम्बन्धात्तु गौ" रिति[10]। द्वितीयो गुणः। शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते। साध्यः पूर्वापरीभूतावयवः क्रियारूपः। डित्थादिशब्दाना-मन्त्यबुद्धिनिर्ग्राह्यं संस्कृतक्रमस्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन संनिवेश्यत इति सोऽयं संज्ञारूपो यदृच्छात्मक इति "गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्ति" रिति महाभाष्यकारः (ऋृ ६ क प्रः सूः)। परमाणुत्वा-दीनां तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम्। गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद्भेद इव लक्ष्यते, यथैकस्य मुखस्य खड्गमुकुर-तैलाद्यालम्बनभेदात्।

---

सङ्केतावच्छेदकतया कल्पितः। **प्राणप्रद** इति-समाधिपदम्, (?) तेनाश्रयोत्पत्ति-क्षणेऽपि सन्निति तात्पर्यम्। **विशेषाधानहेतु**रिति—व्यक्तेः समवायिकारणतया गुण-प्राक्कालसम्बन्धनियमान्न जातिरूपो धर्मः। प्राणप्रद इत्यत्र प्रामाणिकसम्मतिमाह—**उक्तं** **ह्री**ति भर्तृहरिणेति शेषः। स्वरूपेण व्यक्तिरूपेण न गौर्गोपदवाच्यः। तत् किमगौरश्वादिः, सोऽपो[ह] नास्तीत्याह—**नागौ**रिति। तेनान्वयव्यतिरेकाभ्यां जातिरेव शाब्दव्यवहारहेतु-रित्युक्तप्रायम्। द्वितीयस्तु न जात्यन्तर्भूत इत्यत्र प्रमाणमाह(15 b) **शुक्लादिना ही**ति-विवृतमेतत्। कथं **साध्यः** क्रियारूपो, द्रव्यादेरपि साध्यत्वात्। अत आह **पूर्वे**ति। अक्रमरूपस्य क्रमप्राप्तिश्च प्रत्ययेनोच्यते। अपूर्वापरौ पूर्वापरौ भूताववयवौ यस्याः क्रियाया इति विग्रहः। पूर्वोऽधिश्रयणादिरपर उदकसेकादिः। एतद्रूपा यथा पाकक्रिया तथा-ऽन्याऽप्यनुसर्तव्या। तदुक्तम्—कालानुयाति(यि) यद्रूपं धात्वर्थस्य क्रियेति तत्।[11] तेन

---

10 भर्तृहरिकृतं वाक्यपदीयं कारिकावृत्तिभ्यामुभाभ्यां युतमिति विपश्चितां निश्चयः। तेन गद्यमयोऽयमंशो वृत्तौ स्थातुमर्हति। प्रथमखण्डे लवपुरतः (Lahore) सम्पादिते वृत्तिग्रन्थोऽपि मुद्रितः। उत्तरखण्डद्वये कुत्राप्ययमंशः स्यादिति सम्भाव्यते।

11 एतच्च भर्तृहरिमतं महाभाष्यप्रदीपे कैयटेनैवं सङ्कलितम्—'गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पितो भेदः क्रियेति व्यपदिश्यते॥ समूहश्च तथाभूतः प्रतिभेदं समूहिषु। समाप्यते ततो भेदे कालभेदस्य सम्भवः॥…अनन्तरं फलं यस्याः कल्प्यते तां क्रियां विदुः। प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यते''ति।

**हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिस्तच्छुक्लत्वादि सामान्यम्। गुडतण्डुलादि-पाकादिष्वेवमेव पाकत्वादि। बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां**

---

धात्वर्थः क्रियेत्यभिप्रेतम्, सर्वत्र पूर्वापरीभूतो भावात्मैव धातुप्रत्याय्यः। एकस्मिंश्च क्षणे समुदायताऽऽरोपणेन प्रयोग एकापूपी(ति)वत् (श्टः प्रः १म—३१पृः) **अन्त्येति**—अन्ते भवाऽन्त्याऽवि(व)शिष्टेत्यर्थः। उच्चारणानन्तरमेकयैव धिया विषयीकृतं, न तु पूर्ववत् खण्डश उत्पन्नयेति। [त-]देव व्युत्पादयति **संस्कृत-क्रमे**ति[12]। यदृच्छाकल्पितत्वाद्[13] डित्थादिशब्दा एव यदृच्छा इत्युच्यन्ते। एतेषां स्वरूपं तत्संज्ञिषु पुरुषैः सतत्स-(सतत-)मुपाधतया निधीयते। तदेतदभिसन्धाय भगवान् भाष्यकारश्चातुर्विध्यं शब्दस्याभ्यधादित्याह—**चतुष्टयी**ति। उक्तगुणलक्षणासम्भवं मन्यमान आह-**परमाणुत्वेति**[14]। नन्वेतावताऽपि लक्षणमव्यापकमेव। सत्यम् एवन्तु[15]...

... ... ... ... ... ... ... ...

---

12 संहतक्रमं स्वरूपमिति मुद्रितप्रसिद्धपुस्तकेषु पाठो लक्ष्यते। संहृतं शून्यमिति प्रायिकं व्याख्यानम्। श्रीधरव्याख्यानन्तु वर्णसंहार-(-भरत नाः शाः) वेणीसंहारेत्यादिप्रयोगदर्शनादुत्पलशतपत्रवेधादिवत् क्रमस्तत्रास्ति न स लक्ष्य इति रीत्या स्फोटतत्त्वप्रतिष्ठाक्षमम्।

13 'जातिमत्समुदायेऽपि संज्ञावत् कल्प्यते परै'रिति वाक्यपदीयवचनाद् यदृच्छा-शब्दानां तथाभावः।

14 परमाणुत्वेत्यन्यत्र पाठः। चण्डीदासकृतदीपिकायां परमाणवादीनामिति भाव-परोऽयं निर्देश इति विवरणं श्रीधरगृहीतपाठस्य तात्पर्यं प्रामाणिकत्वञ्चा-वेदयति।

15 अत्रादर्शपुस्तके चतुर्णां (१६-१८) पत्राणामभावो यत्कृता त्रुटिः पुस्तकान्तरप्राप्तिसमाधानेनैव विनिवार्यते। तत्र चाशा क्षोदीयस्येवेति महद्वैशसम्।

जातिरेव प्रवृत्तिनिमित्तमित्यन्ये। तद्वानपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात् प्रकृतानुपयोगाच्च न दर्शितम् ॥

स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥८॥

स इति साक्षात्-सङ्केतितः। अस्येति शब्दस्य।

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत् सा लक्षणाऽऽरोपितक्रिया ॥९॥

'कर्मणि कुशल' इत्यादौ दर्भग्रहणाद्ययोगाद् 'गङ्गायां घोष' इत्यादौ च गङ्गाऽऽदीनां घोषाद्याधारत्वासम्भवान्मुख्यार्थस्य बाधे विवेचकत्वादौ सामीप्ये च सम्बन्धे रूढितः प्रसिद्धेस्तथा गङ्गातटे घोष इत्यादेः प्रयोगाद् येषां न तथा प्रतिपत्तिस्तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनात्मनः प्रयोजनाच्च मुख्येनामुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा[16]।

स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥१०॥

'कुन्ताः प्रविशन्ति' 'यष्टयः प्रविशन्ति' इत्याद्यौ कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते। तत उपादानेनेयं लक्षणा। "गौरनुबन्ध्य" इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते न तु शब्देनोच्यते "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति न्यायादित्युपादानलक्षणा तु नोदाहर्तव्या। न चात्र[17] प्रयोजनमस्ति न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते। यथा क्रियतामित्यत्र कर्ता। कुर्वित्यत्र कर्म। प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि च। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र च रात्रिभोजनं न लक्ष्यते श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात्। 'गङ्गायां घोष' इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः

(२०a) धर्म इति। न तावदियं प्रयोजनलक्षणा नापि रूढेत्याह **न चेति**। शब्दानुपस्थितौ कथं तर्हि व्यक्तेः प्रतीतिरिति चेद्, अत्र आह **व्यक्त्यविनेति**। "अविनाभावित्वलक्षणेनाक्षेपेण य(त)स्याः प्रतीतिः, प्रविश पिण्डीमित्यादिवत्।

16 तथाच शब्दव्यापारविचारे एवं वाच्यवाचकार्थनिष्ठो व्यापारावभिधालक्षणे इति।

17 'न ह्यत्रे'ति प्रायिकः पाठः।

**स्वार्थमर्पयति—इत्येवमादौ लक्षणेनैषा लक्षणा। उभयरूपा चेयं शुद्धा, उपचारेणामिश्रितत्वात्।**

**अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्। तटादीनां गङ्गाऽऽदि-शब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः। गङ्गा-सम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः।**

---

न तु लक्षणैषा, तद्विकार-(तस्य द्विप्रकार)त्वादत्र तदसम्भवात्। द्विविधो ह्याक्षेपो लक्षणामूलोऽविनाभावित्वमूलश्च। अत्र चोत्तर एव पक्ष इति न लक्षणासम्भावना कार्येत्यर्थः" (रु. सं. १पृः)। उदाहरणान्तरेणाविनाभावमूलमाक्षेपं स्फुटयति—**क्रियतामिति** कर्मणि लकारः, अतः क्रियैव धातूपात्तौ (त्ता) कर्तारमाक्षिपति। कुर्विति युष्मदर्थ-कर्तरि लकारः। कारककालसंख्यास्तिङ्वाच्या एव, नहि कारकत्वेन क्रियाव्यापकत्वेन वा कर्तृकर्मणोरस्ति विशेषो येन कर्मण्यभिधानम्। अन्यत्राक्षेप इति कल्पना घटते। उक्तञ्च—

आत्मनेपदरूपेण सर्वत्रैवादिकर्मणि।
लकारः स्यात्तथैवायं कर्तर्यपि भवेन्न किम्॥

न च सर्वा क्रिया कर्मव्याप्तेति चेन्, मा भूद्, या तावत्तादृशी तत्र का वार्ता? यदि चाख्यातेन संख्याया नाभिधानं ततः(?), चैत्रः पचतीति सामानाधिकरण्यं न स्यादित्यादिकमव-सेयम्। यथा क्रियासामान्येन कारकसामान्यमाक्षिप्यते तथा तद्विशेषेण तद्विशेषोऽपि क्वचिदि-(20b)त्याह—**प्रविशेति**। प्रवेशात्मा क्रियाविशेषः सन्निहितायामन्य(मन्वय)योग्यायां पिण्ड्यामसम्भवन् व्यवहितमपि गृहात्मकं कारकविशेषमाक्षिपति। योग्यकर्मोपलक्षण-श्चैतत्। एवं कारकविशेषेणापि क्रियाविशेषः क्वचिदित्याह **पिण्डीमिति**। एतद्धि कर्मपदं प्रविशेत्येतस्मिन्नसम्भवद् योग्यमेव भक्षयेत्यादिक्रियापदमाक्षिपति। तदेतद्द्वयमेकजातीयतया समासेनोपन्यस्तम्। **पीन** इति—दिवाभोजनाभावे पीनत्वं नानवाप्य[रात्रिभोजनं] रात्रि-भोजने पर्यवस्यति। कस्य पुनः प्रमाणस्यात्र व्यापार इति जिज्ञासुरु(मु)त्तरयति—**श्रुतेति**। **तस्ये**त्येकशेषनिर्देशो दृष्टान्तदार्ष्टान्तिकसाधारणतया प्रमाणाभिधानाय। "दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पनाऽर्थापत्तिरित्येतद्भाष्टा विवृण्वते। दृष्ट इति प्रत्यक्षानु-मानोपमानार्थापत्त्यभावलक्षणैः पञ्चभिः प्रमाणैरुपलब्धः। प्राधान्यख्यापनार्थं शब्दस्य भेदेन निर्देशः। श्रुत इति शब्दलक्षणप्रमाणेन ज्ञातोऽर्थो वस्तुविशेषोऽन्यथा नोपपद्यत" (रु. सं. ७पृः) इति शब्दस्य कल्पनं श्रुतार्थापत्तिः। शाब्दी ह्याकाङ्क्षा शब्दैरेव पूर्यते। नहि शाब्दाशाब्दयोरन्वय, इतरथा पठेति श्रुत्वा प्रत्यक्षादिना कर्म जानताऽप्य-

( तोऽप्य ) (21a)-न्वयप्रतीतिप्रसङ्गात् । 'तत् परसन्निधिः प्रयोजक' इति चेन्न, नियमेन तात्पर्यावधारणस्य वाक्यार्थे प्रतीत्यसङ्गतत्वात् । अनवधारणे चोक्तमेवेत्यलमवान्तरेण बहुना। अर्थापत्तिव्यवस्थाऽपि, (?)अर्थमन्तरेण न युज्यत इति याऽर्थस्य कल्पना साऽर्थापत्तिः । तत्र यथा ( यया ? ) मन्त्रस्तब्धोऽग्निर्न दहतीति न स्वरूपमात्रेण दाहक इति विस्फोटं दाहकार्यं प्रत्यक्षेणोपलभ्याग्ने र्यया दाहिकाशक्तिः कल्प्यते, सा प्रत्यक्षपूर्विका-ऽर्थापत्तिः । "न चेदमनुमानम्, अतीन्द्रियत्वाच्छक्तेः स्वप्नेऽप्यनुपलभ्यत्वात् ; अन्वय-व्यतिरेकग्रहणासम्भवात् कार्यहेतुत्वायोगात् । देशान्तरप्राप्त्याऽऽदित्यस्य गतिक्रियामनुमाय गमनशक्तिः कल्प्यत इत्यनुमानपूर्विका सा । एवमन्या अपि ज्ञेयाः" । ( रु. सं. ८पृः )

**प्रभाकरगुरुस्त्वाह**[18]—दृष्टः श्रुतो वेति लौकिकीयमनाप्तोक्तिरतो लोकप्रसिद्ध्योपलब्धि-मात्रे वर्तते, न तु विकल्पप्रतिपादन इति । शब्देऽपि हि कल्पितेऽर्थप्रतीत्यैव प्रकृतसमाधानं, तद्वरमर्थ एव कल्प्यतामिति । तेन **भट्टमते** श्रुतार्थापत्तौ तु रात्रिभोजनमर्थ एव । अत्र च बलाबलमीमांसा प्रकृतानुपयोगिनी । उभयत्र-(न)येऽपि यथाश्रुतस्योपपत्तेरित्याशयवतः श्रुतार्थापत्तेर्वेत्यनास्था । **ल**(21b)-**क्षण**मुपलक्षणं तेन लक्षणा लक्षणलक्षणा यथा गङ्गाया-मिति सप्तमी घोषप्रतिवासक्रियाऽधिकरणप्रतिपत्तिफलेति तात्पर्यमवधृतं, न तु श्रौतोप-(त उप)लक्षणस्यार्थस्य वाक्यार्थानुप्रवेश इति । अवच्छेदतोऽपि बाधकस्य निश्चीय-मानत्वात् केवलमसौ सम्बन्धद्वारा तटमुपलक्षयन्नास्ते । तदिदमुक्तं **स्वार्थमर्पयती**ति । एतेन जहत्स्वार्था लक्षणलक्षणेत्युक्तं भवति । शुद्धेति पदं विवृणोति **उभयेति** । क्वचिदभिव्यक्तिस्वरूपभेदयोरेव संसर्गमात्रमारोप्यते शब्दबलाद् यथा—

"प्रतीच्छत्याशोकीं किशलयपरावृत्तिमधरः कपोलः पाण्डुत्वादवतरति तालीपरिणतिम् ।
परिम्लानप्रायामनुवदति दृष्टिः कमलिनीं नवीनस्तन्वङ्ग्या मनसिजविकारो विजयते[19] ॥ इति

( स. कं. पृः ५४ ; हेम. का. अ. वि. १६८ पृः )

---

18 अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पनेति शबरभाष्यम् । तदेवावलम्ब्य सम्प्रदायद्वयस्य स्वस्वसिद्धान्तप्रकटनम् । परं न चाप्यस्याः प्रमाणत्वे कश्चिद्विप्रतिपद्यत इति श्लोकवार्तिकस्वरसान्नात्रानयोः प्रमाणतायां विप्रतिपत्तिः ।

19 सरस्वतीकण्ठाभरणे समाधिगुणोदाहरणे पद्यमेतदुपयुक्तम् । तत्र चतुर्थः पादस्त्वितो भिन्न एव नेयः किन्तूपचरितैव शुद्धेति रत्नदर्पणकारः । प्राचीन-नाटकादपि कस्मादेतदुद्धृतं स्यात् । एवमादिषु प्रयोजनस्यानिगूढतयाऽनादरणीय-त्वाद्व्यञ्जकत्वेन न कृत्यं किञ्चिदिति लोचनोक्तदिशा न व्यञ्जयत्वमाश्रयणीयम् ।

**सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ॥**

**आरोप्यमाणः आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा ॥**

---

तदिदमुपचरिता वृत्तिः । एतदसङ्करः **शुद्धत्वम्** । तदेतत् प्रकृतयोर्व्युत्पादयति । **अनयोरिति** शुद्धभेदयोः । लक्ष्यस्तटादिरर्थो लक्षकः प्रवाहादिः । **न तटस्थत्वमिति**— अनेन 'तटस्थे लक्षणा शुद्धे'ति ( अ. वृ. मा. ५ का ) भट्टमुकुलमतं दूषितम् । गङ्गागता हि पावनत्वादयस्तटे प्रतिपादयितुमभीष्टास्ते च तटस्य गङ्गारूपत्वप्रतीतौ प्रतीयन्ते । न च भेदस्वभावो(वे) तटस्थ इति तटस्थत्व-(22a)-प्रतिपादनमयुक्तम् । अत्र तत्सामीप्यात्तद्धर्मानुमानमनैकान्तिकं ? तदिहोपचारेण सम्बन्धमात्रमभिमतविरुद्धमवगम्येतेत्यत आह **गङ्गेति** । **भेदो** विशेषः ।

**सारोपेति**—अन्यस्यान्यत्रावाप आरोपः । अस्य च विषय्यवष्टभ्यत्वाद्विषय्यारोप्यमाणोऽर्थो विषयः । प्रस्तावादारोपस्य वक्ष्यमाणभेदेन सह पृथग्भावं दर्शयति— **अनपह्नुतेति** । तथेति व्याचष्टे **सामानाधिकरण्येनेति** । एतदन्यथाऽनुपपत्तिरेवात्र गौणताबीजम् । ननु चाग्निं माणवकमानयेति वाक्यानन्तरं पिङ्गलमाणवकानयनदर्शनादाख्यातार्थमुख्यतैवात्र युक्ता, न तु गौणतेति । न च सोपपदाद्धोर्मन्दप्रतीतिरल्पविषयत्वं गौणत्वमिति वाच्यम्, तेषामपि ( तस्या अपि ) वाचकशक्तिं विनाऽसम्भवात्, तत् कुतोऽयं गौणमुख्यप्रविभाग इति ? अत्रोच्यते—यः साक्षादेव शब्दात् प्रतीयते स मुखमिव भवतीति मुख्यः । यस्तु प्रतीतार्थावलम्बिगुणसम्बन्धिव्यवधानेन गम्यते स गुणेभ्य आगत इति गौणः । ननु यद्गिरिशिखरमारुह्य प्रेक्ष्यते तदपि प्रत्यक्षमेवेति न्यायाद् गुणव्यवधानेनापि शब्दतः प्रतीयमानोऽर्थो मुख्य एवेति युज्यते, न हि स्वसामग्रीव्यवधा-(22b)नं कारकाणां कारकत्वं विहन्ति, अश्वेनापि ग्रामादि गच्छन् गन्तैव भवति । नैवम् । अस्त्यत्रापरोऽपि विशेषः । अनादृत्यैव माणवकप्रत्ययं ज्वलनमग्निशब्दात् प्रतिपन्नं दृश्यत्ते(ते), न त्वनादृत्य ज्वलनप्रत्ययं माणवकप्रतिपत्तिः । कुतः पुनरेतत् । यो योऽग्निसदृशो विवक्ष्यते तत्र तत्राग्निशब्दस्य प्रयोगात्तत्सादृश्यविगमे चाप्रयोगादग्निसदृशानयनेनैव पिङ्गलमाणवकानयनोपपत्तेस्तद्गुणान्तरादपि प्रयोगादग्निसादृश्यं प्रवृत्तौ निमित्तम्, न तु ज्वलनेऽप्रतीते तत्सादृश्यं प्रतीयते, तस्माज्ज्वलनेऽग्निशब्दो मुख्यो, माणवके तु गौण इति । तदाहुः—

प्राक् प्रतीतस्य मुख्यत्वं मुखतः प्रथमोद्गतेः ।
पश्चाद्गम्यस्य गौणत्वं गुणागमनहेतुकम् ॥
स्वार्थे प्रवर्तमानेऽपि यस्यार्थं योऽवलम्बते ।
निमित्तं तत्र मुख्यं स्यान्निमित्ताद् गौण उच्यते ॥

तस्य च लक्षणायामन्तर्भाव इति लक्ष्यते। शुक्तिकायां रजतमिति रज्ज्वावहिरित्येवं-प्रकारो योऽपदेशः स भ्रातृ-( भ्रान्तिः ? ), मुख्यत्वेन तद्भावोपपत्तेर्न तु गौणः (?)। तदुक्तम्—

सन्निहितरजतशकले रजतमतिर्भवति यादृशी सत्या ।
भेदानध्यवसायादियमपि तादृक् परिस्फुरति ॥ ( श्रः प्रः ? )

एवम् कर्णौ पिधाय यः (शब्दः) श्रूयतेऽनाहताह्वयः ।
न तस्याद्योद्घोष ( न तस्य घोष ) इत्याख्या ( 23a ) मुख्यवृत्त्योपजायते ॥ इति ।

कर्णक्ष्वेडायां घोष इति यो व्यपदेशस्तत्र कर्णक्ष्वेडाया अथावणथेन ( अश्रावणत्वेन ) यद्यपि घोष इति व्यपदेशो न मुख्यस्तथापि यदा श्रोत्रेन्द्रियस्य बहिर्वृत्तिनिरोधाज्जाठरानल-पच्यमानान्नरसादिशब्दः श्रूयते, अनाहि(ह)ताख्यं शब्दब्रह्मोन्मिषति (च), तदा तयोर्घोषव्यपदेशो मुख्य एव। किं पुनरनाहताख्यं शब्दब्रह्म? उच्यते। शब्दब्रह्मणश्चतस्रोऽवस्था, वैखरी, मध्यमा, पश्यन्ती, सूक्ष्मेति। तथाचोक्तं भाष्यकृता[20]—

अनादिनिधनं ब्रह्म शब्दतत्त्वं [ यदक्षरम् ]।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ ( वा. प. १।१२ )
वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा ।
द्योतिकाऽर्थस्य पश्यन्ती सूक्ष्मा ब्रह्मैव केवलम् ॥

---

20 एवमादर्शपुस्तके। परमेतद्वाक्यपदीयवचनम्। स्फोटप्रमाणकानां वचनानां मुख्यतो वाक्यपदीयादुद्धृतानामुपस्थापनं ध्वन्यालोकलोचने सरस्वतीकण्ठा-भरणोपरि रत्नदर्पणे विस्तरतो विचारश्चालङ्कारकौस्तुभे कविकर्णपूरकृते तद्वि-श्लेषोऽस्मत्कृतायां मौक्तिकावल्याम् ( ३।२०-३० पृः )। अनाहतलक्षण-ञ्चैतत्प्रसङ्गे तन्त्रशास्त्रपरिभाषितमिव प्रतिभाति। केवलं बुद्ध्युपादानकम-रूपेत्यादि रत्नदर्पणे धृतः पाठो मध्यमालक्षणपद्ये। अत्र घोष आद्योद्घोषो वा प्राचीनानां महाभाष्यकृदादीनां दृष्टान्ते भेर्याघातत्वेन वर्ण्यते ( १।१।६६ ),

तत्र वैखरी तावद्विखरो देहस्तत्र भवा वैखरी । कथमुत्पद्यत इति चेत्—

स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।

वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥ ( वा. प. १।१४३ वृ )

इयञ्च चतुर्विधा, वर्णपदवाक्यवर्णसमुदायभेदात् । स्वार्थानुभवगोचरा मध्यमा यथा—

अन्तःसंजल्परूपायाः क्रमरूपानुपातिनी ।

प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ॥ (वा. प. १।१४३ वृ )

इयञ्च द्विविधा सुखात्मिका दुःखात्मिका च । ज्ञानरूपा पश्यन्ती यथा—

---

वाक्यपदीये प्राकृतार्थकृतध्वनिभेदव्यवस्थापनं तन्त्रादिषु "इच्छाशक्तिबलोद्घुष्टो ज्ञानशक्तिप्रदीपकः । पुंरूपिणी च सा शक्तिः क्रियाऽऽख्या सृजति प्रभुः ॥ असावेव बिन्दुः स्थानान्तरगतः पराद्याख्यो भवति' । पश्यन्ती मध्यमा चापि वैखरी शब्दजन्मभूरित्यादिरीत्या तत्प्रपञ्चः । यथा क्ष्वेडा वंशशलाका लक्षणया तदाश्रयः क्रीडामयो व्यापारः । महाभारतेऽनुगीतापर्वणि ब्राह्मणगीताख्यमर्थो विवृतः 'स्थावरं जङ्गमञ्चैव विद्ध्युभे मनसी मम' इत्युपक्रम्य 'ततः प्राणः प्रादुरभूद्वाचमाप्याययत् पुनः । तस्मादुच्छ्वासमासाद्य न वाग्वदति कर्हिचित् ॥ घोषिणी जातनिर्घोषा अघोषा च प्रवर्तते । तयोरपि च घोषिण्या निर्घोषैव गरीयसी ॥ गौरिव प्रसवत्यर्थान् रसमुत्तमशालिनी । सततं स्यन्दते ह्येषा शाश्वतं ब्रह्मवादिनी' ॥ इत्यादिसन्दर्भे सन्तानेन 'तस्मान्मनः स्थावरत्वा-द्विशिष्टस्तथा देवी जङ्गमत्वाद्विशिष्टे'त्यन्तेन प्रतिपादितं विवृतञ्च तत्तात्पर्यं भारतभावदीपे इत्यलम् । अत्रोद्धृतानां वैखरीमुखानां लक्षणं वाक्यपदीयवृत्तौ कुत्राप्यविकलं कुत्र वा संक्षिप्ततरमुपलभ्यते । लवपुरसम्पादिते वाक्यपदीये तु इत्थंपठ्यते ( पृः १२८-२९ )। पुनश्चाह 'स्थानेषु विवृते वायौ…॥१॥ केवलं बुद्ध्युपादानाक्रमरूपा…प्रवर्तते ॥२॥ अविभागा तु पश्यन्ती सर्वतः संहृत-क्रमा । स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥३॥ सेयमाकीर्यमाणा-ऽपि नित्यमागन्तुकैर्मलैः । अन्त्या कलेव सोमस्य नात्यन्तमभिभूयते ॥४॥ तस्यां दृष्टस्वरूपायामधिकारो निवर्तते । पुरुषे षोडशकले तामाहुरमृतां कलाम् ॥५॥ प्राप्तोपरागरूपा सा विप्लवैरनुषङ्गिभिः । वैखरीसत्त्वमात्रेव गुणैर्न व्यवकीर्यत इति ।

**विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥११॥**

**विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णे अन्यस्मिन्नारोपविषये सति साध्यवसाना स्यात्।**

**भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा।**

**गौणौ शुद्धौ च विज्ञेयौ—**

---

इन्द्रियोपलब्धिरूपा येन्द्रियाधानसम्भवा। अप्रदर्शितभेदा च पश्यन्तो सा प्रकीर्तिता ॥

इयञ्च त्रिभेदा, हेयोपादेयोपेक्षणी-(23b)-यभेदात्। योगिगोचरा सूक्ष्मा यथा—

नादाख्या सर्वभूतेषु जीवरूपेण संस्थिता। अनादिनिधना या तु सूक्ष्मा वागनपायिनी ॥

इयञ्च त्रिविधा स्थूल-सूक्ष्म-पर-भेदात्।

स्थूलं शब्दमिति प्राहुः सूक्ष्मश्चित्ता (श्चित्त) मथो भवेत्।
चित्तया रहितं (चित्तव्यवहितं) यत्तु तत्परं परिकीर्तितम् ॥ इति

श्रुतिरप्याह— चत्वारि वाक् परिमितानि तानि विदुर्ब्राह्मणा [ये] मनीषिणः।
गुहा त्रीणि तानि नेङ्गयन्ति तुरीयं वाचं ह वै मनुष्या वदन्ति ॥
( ऋ. सं. १।१६४।४५ )

गुहाशयेषु त्रिषु यदेतत् सूक्ष्मेति गीयते। तदनाहतमित्या[ख्यमा]-मनन्तीति।

**विषय्यन्तःकृतेऽन्यस्मिन्निति**—विषयसान्निध्याद्विषये विषयिमात्रप्रयोगो विषयस्य निगरणमध्यवसानमित्यनर्थान्तरम्। अस्याश्च वृत्तेस्तद्भावापत्तावन्तर्भावः श्रीभोजराजमते। यदाह—"अर्थस्यातथात्वेऽध्यासादिभिस्तथात्वोपपादनं तद्भावापत्ति"रिति। ( शृ: प्र:, ? ) तत्र जानतोऽप्यतस्मिंस्तदित्यारोपणमध्यास इति। **निगीर्ण** इत्युपमागर्भम्।

**सादृश्यादिति**—लक्षणायाः सम्बन्धो न संयोगसमवायलक्षणः किन्तु नियामकोपाधिलक्षण एव, तादर्थ्यादिभिरपि तत्स्वीकारात्। तथा च सादृश्यमपि तत्कोटिनिविष्टमिति कथं गौणी भिन्ना? आह च—

अभिधेयेन सम्बन्धात् सारूप्यात् समवायतः।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता[21] ॥ इति

(24a) द्विरेफशब्दस्य द्वौ रेफौ यस्येति कृत्वा योऽभिधेयोऽत्र भ्रमरशब्दस्तेन यस्य सम्बन्धः षट्पदलक्षणस्यार्थस्य सोऽर्थो द्विरेफशब्देन लक्ष्यते। [ एवम् ] रोदरश्चक्रवाक इति। रूढलक्षणा चेयं, तेन द्विरेफत्वं रोदरत्वञ्च यद्यपि कुररेऽपि सम्भवति तथापि स न

---

21 प्राचीनमीमांसकभर्तृमित्रस्येयं कारिकेति भट्टमुकुलः। ध्वन्यालोकलोचनादावपीयमुदाहृता विशदञ्च तत्र व्याकृता।

इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ 'गौर्वाहीकः' इत्यत्र 'गौरयम्' इत्यत्र च। अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न परार्थोऽभिधीयत इत्यन्ये। साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यत इत्यपरे।

---

लक्ष्यत इति[22]। एवमभिधेयेन सम्बन्धं व्याख्यातरूपं निमित्तीकृत्य सादृश्यादयो व्याख्येयाः। **वामनो**ऽप्याह—'सादृश्याल्लक्षणा वक्रोक्ति'रिति ( का. अ. सू. वृ. ४।३।८ )। समवायतः सम्बन्धादित्यर्थः। क्रियायोगात् कार्यकारणभावादित्यर्थः। अतो गौण्या लक्षणाया-मन्तर्भावात् **सम्बन्धान्तरमि**त्यत्रान्तरशब्दः सादृश्यादन्यत्वमाह **इमावि**त्यादि। तथा सारोपाधि(ध्य)वसाने इत्यनुकर्षणे वा( ना )-सङ्गतिः, अतो रूपशब्देन पूरणि-( रूपपि ? )[23] सादृश्याद्गौणौ सम्बन्धान्तर[तः] शुद्धाविति यथाक्रममन्वयः। तत्र गौणौ यथा **"गौ र्वाहीकः" "गौरय"**मिति। **अत्र हीति**—गोशब्दो लक्षणया जाड्य-मान्द्यादीन्युपस्थापयति। निमित्तञ्च स्वार्थेन गोवि (गवि) जात्या (जाड्यात्) सामानाधिकरण्यम्। तत्रस्थान्येव प्रवृत्तिनिमित्तीकृत्य वाहीकमभिधत्त इति **केचिदा**हुः। तदसत्, शक्तिगौरवात्, लाघवार्थमेव च लक्षणाऽङ्गीकारात्। अतो मतान्तरमाह—**स्वार्थे**ति। गुणाभेदेन स्वार्थ-सहचरितगुणैकजातीयत्वेन (24b) परार्थवृत्तिगुणमात्रं **लक्ष्यते** परार्थस्त्वाक्षिप्यत इति। इदमपि न सम्यक्, [ गो ]पदात् परार्थोपस्थितिप्रसङ्गात्। अतः स्वमतमाह—

---

22 रोदरत्वमिति चक्रवाककुररपदयोर्वर्णविश्लेषे 'च् अ क् र् अ व् आ क् अ', 'क् उ र् अ र् अ' इत्येवं वर्णविन्यासगर्भे 'र' वर्णस्य मध्यपातित्वम्। लोचनग्रन्थस्योपयोगोऽत्र टीकाकृता कृत इति नातिरोहितमेव।

23 आरोपाध्यवसानरूपाविति प्रतीकं गलितं स्यात्। 'प्रशंसायां रूप'-( पाः ५।३।६६ )वित्यादिना प्राशस्त्यबोधको रूपप्प्रत्ययो गुणाधानार्थ इति टीकाकृता-माशयः प्रतिभाति। प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसेति वैयाकरणानां विवरण-मुपचारस्वरूपं समादधदेतदुपयोगि। अत्यन्तं विशकलितयोः सादृश्यातिशय-महिम्ना भेदप्रतीतिस्थगनेन परिपूर्णतायामालङ्कारिक-सिद्धान्तेनोपचारस्थापनमु-पचारे च गौणी। प्रत्ययस्य 'रूपशब्द' इति निर्देशेन सह टीकाकृतः 'अत्र कल्पपदेने'ति चतुर्थोल्लासस्यान्तिमे भागे प्रयोगस्तुलनीयः।

उक्तश्चान्यत्र—"अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता" (त. वा. ३।४।१२) इति।

अविनाभावोऽत्र सम्बन्धमात्रं न तु नान्तरीयकत्वम्। तत्त्वे हि 'मञ्चाः क्रोशन्ति' इत्यादौ न लक्षणा स्यात्। अविनाभावो वाऽऽक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम्। 'आयुर्घृतम्' 'आयुरेवेद'मित्यादौ च सादृश्यादन्यत् कार्य-कारणभावादि सम्बन्धान्तरम्। एवमादौ च कार्यकारणभावादिलक्षणपूर्व

---

साधारणेति। प्रकृते तु पक्षत्रयोक्तेऽपि न काचित् क्षतिः[24]। अत्रैव प्रामाणिक [भट्ट]-सङ्गति (सम्मति)-माह—अभिधेयेति। वाच्यसम्बन्धिनमर्थं प्रत्येतुं या शब्दव्यापार-भूता प्रतीतिः सा लक्षणेति यदि वा प्रतीयतेऽनयेति प्रतीतिर्ज्ञानानुकुला वृत्तिः। यद्यप्य-परार्धमात्रमेव प्रस्तुतोपयोगि तथापि लक्षणाविशेषत्वं गुणवृत्तेराख्यातुं पूर्वार्धमपि लिखित-वान्। ननु यद्यविनाभावो लक्षणानिमित्तं कथं न प्रागुक्तयोगमात्रहानिः? अत आह—अविनाभाव इति। सम्बन्धमात्रमविनाभावपदेन वार्तिकेऽभिमतम्, कथमन्यथा मञ्चाः क्रोशन्तीत्येवमादौ लक्षणा? अत्रापि केचिदाचार्यदेशीयाः कथञ्चिदविनाभावं समर्थयन्ते। तदाह अविनाभावो वेति—गृहीतव्याप्तेः पक्षधर्मतादर्शनात् परामर्शोदये-ऽनुमितिसामग्री सम्भूतेति न शब्दव्यापारसिद्धिः। उक्तमिति—व्यक्तयविनाभावित्वादिति। अत्रान्तरे शुद्धभेदद्वयमुदाहरति—आयुरिति। सादृश्यादन्यदिति सम्बन्धान्तरपद-

---

24 टीकाकृत्तु 'केचित्' 'अन्ये' 'अपरे' इति वृत्तिपरामर्शादेवं मन्यते। 'अपरे' इति निर्दिष्टेनान्तिमपदेन स्वमतमित्यपि लिखतीति विचित्रा शैली! एतदनन्तरवाक्ये यद्भ्रष्टपदं तत्त्वादर्शपुस्तके लिपिकारानवधानात् पूर्वतरे वाक्ये प्रवेशितम्। मूलकोश एकत्रस्थितं गलितसुचकचिह्नमन्यपंक्तिविपर्यासतोऽन्यथोद्-बुद्धमिति स्यात्। मानान्तरविरुद्धे तु मुख्यार्थस्य परिग्रह इति मूल-भट्टवार्त्तिकीयपङ्क्तिरिहादौ परामर्शनीया। भट्टवार्त्तिकमते गौणीलक्षणयो-र्भिन्नवृत्तित्वमापतेत्। अत्र मूले त्वन्यथा सिद्धान्तितमिति श्रीधरकृतनिर्णयः। भट्टवचनस्थ [तु] पदस्यान्यथा समर्थनेन स्वनिर्णयानुकूलं सम्बन्धमात्रमविनाभाव-पदेनेत्यादिनाऽत्र विवृतम्। चण्डीदासस्तु (४८-४६ पृः) भट्टवार्त्तिकीयभेदं स्वीकुर्व-न्नपि मूले तस्य प्रतिध्वनिमुपलभमान इव मम्मटोपरि विषमुद्गीर्यालङ्कारशास्त्र-प्रामाण्ये पूर्वमीमांसकायुद्धाविततर्कैवैतथ्यमुपपादयन्नुपसंहरति।

आरोपाध्यवसाने। अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदागमश्च प्रयोजनम्। शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि। क्वचित् तादर्थ्यादुपचारो यथा इन्द्रार्था स्थूणा इन्द्रः। क्वचित् स्वस्वामिभावाद्- यथा राजकीयः पुरुषो राजा। क्वचिदवयवावयविभावाद् यथा-ऽग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः। क्वचित् तात्कर्म्याद् यथाऽतक्षा तक्षा।

लक्षणा तेन षड्विधा ॥१२॥

आद्यभेदाभ्यां सह। सा च

व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने।

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव।

तच्च गूढमगूढं वा—

---

व्याख्यानम्। **ताद्रूप्येति सर्वथेति** चेति यथासंख्यम्। एवं तादर्थ्यादिलक्षणास्वपि द्रष्टव्यम्। **अग्रहस्त** इति—''इह हस्ता (25a)ग्रमग्रहस्त इति प्रयोगद्वयं दृश्यते, तत्राद्ये षष्ठीसमासः, द्वितीये तु सामानाधिकरण्ये विशेषणसमासः। तत्र हस्तावयवेऽग्रमात्रे हस्तशब्दो 'ग्रामो दग्ध' इत्यादिवदवयवे समुदायोपचाराद्वर्तते। तदुक्तं **वामनेन** 'हस्ताग्राग्रहस्तशब्दौ गुणगुणिनो· र्भेदाभेदाभ्या'मिति (का. अ. सू. वृ. ५।२।२०)। विपरीतलक्षणा प्रागेवोदाहृतेति न पुनरुपन्यस्तवान्।

**षड्विधेति**—उपाधिसङ्कलनमिदम्। तत्रानन्तरं चतुर्णामेव प्रकाराणामभिधानाद् दूरान्तरितं प्रकारद्वयं स्मारितम्। **आद्येति**—उपादानलक्षणालक्षणलक्षणाभ्यां सहेति। तदयं परमार्थः—लक्षणाद्वयी रूढा चारूढा च। प्रत्येकमुपादानलक्षण-लक्षणलक्षणाभ्यां चत्वारो भेदाः। तत्रापि प्रभिद्य सारोपा-साध्यवसानाभ्यामष्टौ। तत्रापि सादृश्यसम्बन्धा-न्तराभ्यां षोडशेति।

सोऽयं ध्वनौ निर्णेतव्ये लक्षणाप्रपञ्चविवेकं( विवेचनं ) किमर्थमित्याशङ्क्य विवक्षित-विवेकं करोति सूत्रकार इत्याह **सा चेति**। तेन रूढिलक्षणा हेयकोटिः। प्रयोजनवती-मुपादाय तत्पृष्ठे व्यङ्ग्योट्टङ्कनेन विवक्षितवाच्यस्य वक्ष्यमाणत्वात्। ननु प्रयोजनस्य प्रतिभास· मात्रेण कथं व्यङ्ग्यसद्भाव इत्यत आह **प्रयोजनं हीति**। यस्मात् प्रयोजनाद् गो(व्यङ्ग्यो ?)- व्यञ्जनादेवावगम्यते ततस्ते·(25b)·नैव **व्यङ्ग्येन सहितेति**। तत् किं सर्वत्र प्रयोजनलक्षणा

**तच्चेति व्यङ्ग्यम्। गूढं यथा—**

**मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं**
**समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।**
**उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं**
**बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥९॥** ( ध्व. आ. लो. ६३ पृः )

---

ध्वनिमूलमित्याह **तच्चेति**। '**वा**' शब्दः समुच्चये, लक्ष्यापेक्षया विकल्प इति केचित्। **गूढं** काव्यतत्त्वार्थपारावारीणमतिविभवलक्षणसहृदयप्रतिभामात्रप्रकाशनीयम्। **अगूढं** सह(द)याहृदयसाधारणप्रतिभासम्। आभ्यामेव भेदाभ्यां ध्वनिर्गुणीभूतव्यङ्ग्यं [च] वक्ष्यते। व्यङ्ग्येनेति कारिकायां प्रकान्तमतो व्याचष्टे **तच्चेति**। **व्यङ्ग्यमिति**—आत्मनो विभुत्वेऽपि यथाविशिष्टाधिष्ठानयुक्तशरीर एव जीवव्यवहारो न तु घटादौ, तथा ललितोचित-सन्निवेशचारुणि शब्दार्थशरीर एव ध्वनिव्यवहारो न पुनः "सिंहो वटु"रित्यादौ, शौर्यातिशयव्यङ्ग्यसम्भवेऽपि श्रुतार्थापत्ताविवार्थान्तरस्याभिधेयार्थोपपादन एव पर्यवसानादिति भावः। अतएव हृदयदर्पणे यदुक्तं 'सर्वत्र काव्यव्यवहारः स्यादि'ति तदपहस्तितम्[25]। गूढागूढविभागश्चायं न कल्पनामात्रमूलः किन्तु लक्ष्यप्रसिद्धिमवतीर्ण इति दुर्दुरूढप्रबोधार्थ-मुदाहरणद्वयमाह—**यथे**ति। **विकसितस्मितमि**ति "अत्र विकसितत्वेन प्रसृतत्वं वशित-त्वेनायतत्वमेवं समुच्छलितत्वादिनोल्लसितत्वादि च लक्ष्यते। प्रयोजनत्वञ्च तेषामेवा-संविज्ञानपदनिबन्धनं लोकोत्तरसातिशयत्वम्। तथाहि ल-(26a)क्ष्यं धर्मधर्मिभेदाद्द्विविधम्। तत्र धर्मी यत्र लक्ष्यते तत्र धर्माः प्रयोजनम्, यथा गङ्गाशब्देन तटे लक्ष्ये पावनत्वादयः। यत्र तु धर्मा एव लक्ष्या न तत्र धर्मान्तराणि प्रयोजनीभूतानि सम्भवन्ति, धर्माणां धर्मान्तरा-भावात, अपि तु तत्र तेषामेव सातिशयत्वं प्रयोजनम्। यथा 'रामोऽस्मी'त्यादौ रामपदेन राज्यभ्रंशवनवासादिधर्मेषु लक्षितेषु लोकातिक्रान्तातिशयत्वमेव प्रयोजनम्, एवमिहापि बोद्धव्यम्" ( रु. सं. ८ पृः )। यत्तु **हृदयदर्पण** उक्तम्—'रामोऽस्मीत्यादो हहा-हेति संरम्भोत्थोऽयं चमत्कार' इति। तत्रापि संरम्भ आवेगो विप्रलम्भव्यभिचारी[ति] रसध्वनिस्तावदुपगतः। न च 'राम'शब्दाभिव्यक्तधर्मान्तरसाचिव्यमन्तरेण संरम्भोल्लासोऽपि। अहं सहे तस्याः किं वर्तत इत्येवमामोहं ( मात्मा हि ) संरम्भः।" (ध्व. आ. लो. ६३ पृः)

---

25 सर्वमेतदिहोत्तरत्राप्यनुमानखण्डनादिध्वनिध्वंसनाक्षेपविषयकं ध्वन्यालोकलोचनतो गृहीतम्।

अगूढं यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥१०॥ ( रविगुप्तस्य )

अत्रोपदिशतीति।

तदेषा कथिता त्रिधा ॥१३॥

अव्यङ्ग्या गूढव्यङ्ग्याऽगूढव्यङ्ग्या च।

तद्भूर्लाक्षणिकः—

शब्द इति सम्बध्यते। तद्भूस्तदाश्रयः।

तत्र व्यापारो व्यञ्जनात्मकः।

कुत इत्याह—

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥१४॥
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।

---

किञ्च 'यस्य मित्राण्यमित्राणी'-(४र्थ उः ७३ श्लोः )त्यादौ धर्मान्तरपरिणतं संज्ञिविशेषं मित्रादिशब्दा यत् प्रतिपादयन्ति तत्र संरम्भस्य सम्भावनाऽपि नास्तीत्यास्तामेतत्। **उपदिशतीति**—'अत्राप्रयासेन शिक्षादानमभिधेयवत् स्फुटं प्रतीयते' ( रु. सं. ८ पृः ) **तदेषेति** वाचा [ त्रिधा ] कण्ठतः षोढा अर्थतश्च षोडशव(धा) व्याख्याताः। तेन प्रयोजनवतीर्द्विधोपादाय सा शृङ्खला योजयितव्येति भावः। व्यङ्ग्येन रहिता सहिता चेति द्वैविध्यमुपक्रम्य **त्रिधेत्यु**पसंहारग्रन्थो विरुद्ध (26b) इव प्रतिभासते, अत आह—**अव्यङ्ग्या गूढव्यङ्ग्याऽगूढव्यङ्ग्या चे**ति—द्वन्द्वपरवर्तिनो व्यङ्ग्यशब्दस्य प्रत्येकमन्वयः।

एवं लक्षणास्वरूपं विविच्य प्रकृत उपयोजयति **तद्भूरि**ति। [शब्द इति] प्रक्रान्तविशेष्यपदमिहापि सम्बन्धनीयमित्याह **शब्द इति**। ततो भवतीत्यसङ्गतार्थभ्रमं निवारयति **तदाश्रय** इति—तस्या लक्षणाया भूर्भूमिराश्रयः, व्यापारस्य व्यापारिततन्त्रत्वादित्यर्थः। व्यङ्ग्येन सहितेत्युक्तं तत् साधयितुमभ्युपगमवाक्यं सूत्रप्रतीकं **तत्रेति**। प्रयोजनवल्लक्षणावृत्तौ शाब्दव्यापारः प्रयोजनप्रतीत्यनुगुण इति शेषः। अत्र शिष्यजिज्ञासामनूद्य प्रमाणमवतारयति **कुत** इत्यादि। **आधातुमु**त्पादयितुं तुमन्प्रत्ययेनोद्दिश्य तामाह। उद्देशना च प्रतिपिपादयिषैव। सैव रूढिलक्षणायां प्रयोजिका, अन्यथा "काश्चिन्नैव त्वशक्तित" ( तन्त्र. वा. ७म उः उद्धृति )

इति निषिद्धस्य प्रयोगे दुष्टतैव स्यात्। नन्वस्तु प्रतीतिः, तथापि कथं ध्वननसिद्धिः ? अत आह **शब्दैकगम्य** इति—विवक्षिततमे लक्षि[त] मात्रे गम्ये। अभिधाऽऽदिभिः सिद्धसाधनमाशङ्क्याह **नापरेति**। **क्रिया** व्यापारः, भाव्यनिष्ठस्य भावकव्यापारस्यैव करोत्यर्थत्वात्। अयमभिसन्धिः—अस्ति तावत् 'किमिव हि मधुराणां मण्डनं नाकृतीना'-(अभि. श. १।१३) मित्यत्र मधुरपदश्रवणा-(27a) नन्तरं यथा शर्करादिमाधुर्यमविवेकिनो विवेकिनो वा झटिति साक्षात्कारमात्रगोचरं चमत्कारमर्पयति तथा वर्णनीयाऽऽकृतिरिति सहृदयावर्जकविशेषप्रतिपत्तिः। सा च न स्मृतिरननुभूतविषयत्वात्। अनुभूतिस्तु(श्च) प्रत्यक्षाद्यन्यतमत् करणमपेक्षते, तत्र[प्रत्यक्षो]पमा(ना)दीनामसम्भावनीयत्वाल्लिङ्गं वा शब्दो वेति द्वयमवतिष्ठते। तयोराद्यस्तावन्न सम्भवति, मधुरपदप्रयोगस्य व्यभिचारित्वात्तद्धाव्यत्वासिद्धेः। यत्र यत्रैवं महाकवयः प्रयुञ्जते तत्र तत्रानुमेति चेत, न, व्याप्तिग्रहणकाले मौलिकस्य प्रमाणस्याभावात्। स्यादेतत्, 'गुणवृत्तौ गिरां यावत् सामग्रीष्टा निबन्धनं सैव लिङ्गं भविष्यतो'[26]-(व्य. वि. १।४५)-ति, नैतत्, मुख्यार्थानुपपत्त्यादेरेव सामग्रीत्वात्, तस्याश्च प्रयोजनप्रतीतिप्रतिबन्धे मानाभावात्। अतः शब्द एव करणम्। सोऽपि मधुरादिरेव स्यादन्यो वा ? नान्यः, कस्यचिदसन्निधेः कस्यचिदवर्जनीयसन्निधित्वात्। न (स)चाभिमतः शब्दो विना व्यापारेण ज्ञानं जनयति। स च [व्यापारो] व्यञ्जनमेव। व्याचष्टे **प्रयोजने-**

---

26 "सैव लिङ्गतयाऽस्माभिरिष्यतेऽर्थान्तरं प्रती"त्युत्तरार्धे पाठो व्यक्तिविवेकीयसंग्रहश्लोके। अत्र भूमिकायां सूत्रपातनमिव प्रस्तुतस्य मुखबन्ध इव वा यः प्रकारोऽनुसृतो ग्रन्थकृता तस्यैव विवरणं टीकायाम्। पञ्चमोल्लासोत्तरार्धप्रतिपाद्यस्य व्यञ्जनव्यापारस्यानन्यतन्त्रतासमर्थकस्य तत्रैवाबीजं फलपाकप्रभृतिप्रदर्शने सौष्ठवं स्यात्। काव्यपुरुषावतारस्य ध्वनिप्रस्थानस्थापयितुः श्रीमदानन्दवर्धनाचार्यस्य ध्वन्यालोके प्रथमोद्द्योते सैव प्रक्रिया या क्वचित् सूत्राकाराऽपि यथा ध्वनिलक्षणस्थापने, 'शब्दो नैव स्खलद्गति' रित्यादौ वा, क्वचिच्च प्रपञ्चपञ्चनपरा यथाऽलङ्काराणामापाततो ध्वनिना समानावकाशानां पृथक् पृथग्विवेचने लक्षणोपलक्षणयोर्भेदप्रदर्शनादौ वा एकार्थीभूता। नव्यतन्त्रतन्त्रयितृलोचनकृत्कृता विषयस्यैवं द्विधा विभक्तिरादिमोद्द्योतद्वयविवरणे। सर्वथेतरत्रैकार्थ्यमनुसरन्नपि ग्रन्थरचनायां मम्मटभट्टस्तत्रैतामेव च्छिन्नप्रायां प्रणालीमनुसरति।

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तत्प्रतीतिरपि तु तस्मादेव शब्दात्। न चात्र व्यञ्जनादृतेऽन्यो व्यापारः। तथाहि—

नाभिधा समयाभावात्—

गङ्गायां घोष इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दाः सङ्केतिताः।

हेत्वभावान्नलक्षणा ॥१५॥

मुख्यार्थबाधादित्रयं हेतुः।

तथाच

लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो।

न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥१६॥

---

त्यादि। ननु भवतु शब्दव्यापारः, स पुनरभिधाऽऽदिभ्यो न व्यतिरिच्यत इत्याह **तथाहीति।** समयापेक्षया (पेक्षा) हि प्रतिपादनाशक्तिरभिधा—न च गङ्गा (27b)पदात् पावनत्वादिप्रतीतिर्भवन्ती समयमपेक्षते, तदिदमुक्तं "**न तत्र सङ्केतिता**" इति। नापि तात्पर्यशक्तिस्तस्याः संसर्गभेदेव(भेद एव) पर्यवसानादिति पूरणीयम्। अतएव हि 'ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्या' (१८ काः वृत्ति) इत्युपसंहारग्रन्थो घटते। अस्तु तर्हि तृतीयकक्षापातिनी लक्षणा, इत्यत आह—**हेत्वभावादिति**। **तथाचेति**—यथा मुख्यार्थबाधादित्रयं न निमित्ततया सम्भाव्यते तथेदमुच्यत इति। **लक्ष्यं न मुख्य**मिति—"इदं प्रयोजनवत्त्वस्य लक्षणीयत्वसम्भावनायामुत्तरम्। तत्र मुख्यार्थबाधसम्बन्धे प्रयोजने [च] सति लक्षणा प्रवर्तते। न च प्रयोजने लक्षयितव्ये त्रयमेतत् सम्भवति। तथाहि तटादेर्लक्ष्यस्य बाधे प्रयोजनं लक्ष्यं स्यात्, न च तदभिप्रायेण मुख्यार्थबाधो घटते, न हि तटादिर्मुख्योऽर्थो, लक्षणीयत्वात्। नापि तस्य बाधस्तस्य घोषाधिकरणत्वोपपत्तेः। अपि च सम्बन्धनिबन्धना लक्षणा प्रयोजने प्रवर्तितुं नार्हति, तटादेर्लक्ष्यस्य पावनत्वादेश्च प्रयोजनस्य सम्बन्धाभावाद्, गङ्गागता हि पावनत्वादयस्तटे प्रतिपाद्या न स्वगताः, स्वगतानां स्वप्रतिपाद्यताऽर्हत्वात्। न च गङ्गागतपावनत्वादिभिस्तटेन कश्चित् सम्बन्धः। अतएव 'तटस्थे लक्षणा शुद्धे'ति (अ. वृ. मा.) प्रागदूषितम्। किञ्च प्रयोजने लक्ष-(28a)णीये लक्ष्यत्वादेव प्रयोजनं मार्गणीयम्। न च तदस्ति। नापि युज्यते।" (रु. सं. ८-९ पृः) लक्ष्यमाणत्वप्रयोजनान्तरानुसरणशरणतायामनवस्थाप्रसङ्गादित्याह **एवमपी**ति—न च बीजाङ्कुरादिव-

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति तद्वद् यदि तटेऽपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत्। न च तटं मुख्योऽर्थः। नाप्यत्र बाधः। न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः। नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम्। नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः।

एवमप्यनवस्था स्याद् या मूलक्षतिकारिणी।

एवमपि प्रयोजनं चेल्लक्ष्यते तत् प्रयोजनान्तरेण तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृदनवस्था भवेत्।

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते, 'गङ्गायास्तटे घोष' इत्यतोऽधिकस्यार्थस्य प्रतीतिश्च प्रयोजनमिति विशिष्टे लक्षणा तत् किं व्यञ्जनयेत्याह—

प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥१७॥

---

ददोषः प्राथमिकप्रतीतिहेतुभङ्गत्वादित्याह—**या मूलक्षतिकारिणी**ति, तदित्थं "तावत्त्रितयाभावात् प्रयोजने लक्षणा न युज्यते, अपि च लक्षणीयेऽर्थे शब्दस्य स्खलद्गतित्वं प्रतिपादयितुं शब्दो न शक्तो निराकाङ्क्षत्वेन तत्रैव विश्रान्तेः। मुख्यार्थबाधात्तु स्खलद्गतित्वं न शङ्कनीयम्। वाच्याभिप्रायेण मुख्यार्थबाधो लक्ष्याभिप्रायेण तु न(?) स्खलद्गतित्वमिति महाननयोर्भेदः। तस्मात् प्रयोजनलक्षणाया असम्भवे व्यञ्जनमेव शब्दव्यापार इति स्थितम्" (रु. स. ६पृः)।

**प्रयोजनेन सहित**मिति—"कश्चिद् ब्रूयाद्, गङ्गायां घोष इत्यादौ पावनत्वादिप्रयोजनविशिष्टमेव तटादि लक्षयिष्यते, तस्यैव प्रत्य-(त्ये)यत्वात्, एवञ्च नास्ति व्यञ्जनव्यापारस्य विषय इति। तत्रोच्यते—लक्षणायाः प्रयोजनं प्रस्तुतं, लक्षणा च शब्दव्यापारः। व्यापारश्च विषयनिष्ठ एव, तन्मुखेन स्वरूपप्रतिलम्भात्। विषयश्चात्र प्रत्येयत्वात् प्रतीतिगोचरत्वेन, न सम्पाद्यत्वेन। एवञ्च लक्षणायाः प्रयोजनमिति भणिते यादृशी लक्षणा तादृश्याः प्रयोजनं वाच्यम्, प्रत्येयविषयनिष्ठशब्दव्यापाररूपा हि लक्षणा, (28b) तस्या गर्भीकृत (प्रयोजन) विषयायाः प्रयोजनविषये कोऽवसरः प्रयोजनस्य? लक्षणाविषयत्वेन गर्भीकृतत्वभङ्ग्या हि विषयस्य प्रयोजनं, न तु प्रयोजनं विषयः। तत्तु प्रत्येयतया विषयत्वेन विचार्यमाणं तदतिरिक्तव्यापारान्तरविषयो भवितुमर्हति, उत्तरकालिकत्वात्। तच्च व्यापारान्तरं व्यञ्जनमेव। एतादृशी चोपपत्तिर्ग्रन्थकृता दृष्टान्तमुखेन प्रकाशिता" (रु. स. ६पृः)।

कुत इत्याह—

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्।**
**प्रत्यक्षादेर्नीलादिर्विषयः। फलं तु प्रकटता संवित्तिर्वा ॥**

---

**फलं** प्रकटयति (**प्रकटतेति**) ज्ञानज्ञेयभावनियामको ज्ञेयगतो ज्ञाततालक्षणो धर्मः प्रकटता। तथाच ज्ञानस्य परोक्षत्वप्रतिपादनार्थं **भट्टाचार्येणोक्तम्**[27] (?) यथा रूपादिप्रकाशान्यथाऽनुपपत्त्येन्द्रियसिद्धिस्तथा ज्ञानस्यापि सिद्धिरिति। तथाहि तस्य(?) भाष्यम् 'न हि कश्चिदज्ञातेऽर्थे बुद्धिमुपलभते ज्ञाते त्वनुमानादवगच्छति' (श. भा. १।१।५) वार्त्तिकञ्च 'तस्य ज्ञानं ज्ञाततावशा'दिति 'ज्ञातता च विषयप्राकट्यमुच्यत'-(त. वा.) इति। सम्यग्वित्तिः **संवित्तिर**नुव्यवसायात्मकं ज्ञानमित्यर्थः। व्यवसायो हि ज्ञानं यथाऽयं घट इति ज्ञानं, तद्विषयं तु ज्ञानमनुव्यवसायो यथा घटमहं जानामीति वैशेषिकादयः। एवञ्च केनचिदभियुक्तेन ध्वनिध्वंसनामनि स्वप्रकरणे यद्गर्जितम्[28] 'यद्येन न साध्यते तस्यापि तत्प्रयोजनत्वे सर्वस्य सर्वप्रयोजनत्वप्रसङ्गः, ततस्तत्साध्यत्व-विपक्षादतस्तत्साधकत्वात् (29a)तत्प्रयोजनत्वं व्यावर्तमानं तत्साध्यत्वेन व्याप्यते। ततश्च यद्यत्प्रयोजनं तत्तत्साध्यं यथा पाकादिफलभूतमोदनादि। लक्षणाप्रयोजनञ्च पावनत्वादि

---

27 एवं श्लोकवार्त्तिके भट्टाः—नित्यं सत्सु यथा लोके रूपादिषु घटे पृथक्। चक्षु-राद्यनुरोधेन संवित्तिर्व्यवतिष्ठते ॥ एवमेव घटत्वादौ सर्वान् प्रति भवन्त्यपि। वाचकस्मृतिभेदेन संवित्तिर्व्यवतिष्ठते ॥ तस्माद्बहिः स्थितोऽप्यात्मा नराणां चक्षुरादिभिः। प्राप्य वाऽप्राप्य वा बुद्धेर्विषयत्वेन कल्प्यते ॥ तत्र सुचरित-मिश्राश्च 'सिद्धं तावत् प्रतीतिबलाद्बाह्यालम्बनं ज्ञानमिति, स बाह्योऽर्थात्मा प्राप्यैवेन्द्रियैः प्रकाश्यते' इति। २य खण्डे (१८१-८२ पृः)

28 इत्थं "उपादायापि ये हेयास्तानुपायान् प्रचक्षते। उपायानां हि नियमो नावश्य-मुपतिष्ठत" इति न्यायेन वाक्यबोधज्ञानपरिच्छेदयोर्मीमासकमतं शरणीकुर्वता-मप्यस्माकमस्मदुपजीव्यव्यञ्जनाविषये न तैः संवाद इति दर्शयितुम् 'एवञ्च केनचिदभियुक्तेने'त्याद्यवतारए' टीकायाम्। 'इदन्तावदयं प्रतीतिज्ञो मीमांसक' इति "मीमांसकस्य प्रपौत्रं प्रति नैमित्तिकत्वमभिमत"मिति, "श्रोत्रियस्यानुवाकहतबुद्धे-रतिकौशलमि"ति, 'जैमिनिसूत्रे ह्येवं योज्यते न काव्येऽपी'त्यादिविशेषणैस्तस्याभि-युक्तस्य हृदयदर्पणकर्तुर्भट्टनायकाचार्यस्य नव्यालङ्कारिकसिद्धान्ते तिरस्कारो-प्येतदर्थोऽन्वर्थ एव।

**विशिष्टे लक्षणा नैवं**

**व्याख्यातम् ।**

**विशेषाः स्युस्तु लक्षिते ॥१८॥**

**तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः । तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यमवश्यमेषितव्यम् ।**

---

तस्मात्तत्साध्यतयाऽस्यापि प्रतीतिरित्यादि, तत् साध्यत्वसाधनात् प्रत्येयत्वेन च विषयत्वस्यासमर्थनान्निःसारमेवेति नेह विस्तारितम् । यत्तु ओदनादेः पाकविषयत्वमुच्यते तदुद्देश्यत्वात्, न प्रतीतिगोचरत्वात् । प्रतीतिगोचरत्वञ्चेह प्रस्तुतमित्यलं दुःसमर्थसमर्थनेन । अन्ये तु पावनादिविशिष्टे लक्षणामित्थं दूषयन्ति । अनन्वयप्रभवाऽन्वयपर्यवसायिनी च लक्षणा न्याय्या, अन्यथा भेदाश्रयणस्य निर्हेतुक(त्वं) स्यात् । एवं मुख्यार्थबाधापर्यवसायिनाऽनन्वयेन समुत्थापिता लक्षणा येन विनाऽन्वयघटनं न स्यात्तदेव विषयीकरोति, नातिरिक्तं किञ्चित् । कठिनद्रव्यञ्च तटादिकं विना 'गङ्गायां घोष' इत्यादौ न भवत्यन्वयो न तु पावनत्वादिभिर्विनेति तदेव लक्षणीयम्, न नु ( न तु ) पावनत्वादि प्रयोजनभूतमिति । तदत्र व्यञ्जनमेव साधु ।" उपसंहरति—**विशिष्टे लक्षणा नैवमि**ति—अयञ्च सूत्रभाग उपसंहार्यव्याख्ययैव व्याख्यात इत्यत **व्याख्यातमिति । विशेषाः स्युरि**ति सम्भावनाप्राणा हि लिङ् । पावनत्वादयो विशेषाः प्रयोजन-(29b)रूपाः स्युः प्रतीतिविषया इति शेषः । सा च प्रतीतिरौत्तरकालिकी भवन्ती प्रतिक्षिपति प्रसिद्धयाभिधाना शब्दप्रवृत्तिमुपादत्ते च विलक्षणामिति । प्रकरणार्थं सङ्कलयन्नाह न चेति ( **तटादौ** चेति ) । तत्रैव ध्वननादिशब्दानां सङ्केतः । तेन यत् कश्चिदाह ध्वनिर्ध्वनिरित्यलीकसहृदयत्वभावकानामसदर्थव्यवहार-( ध्व. आ. वृः. ८ पृः ) स्तदपास्तमित्याह **तच्चे**ति । तथाचोक्तम्[29]—

यत्राभिधालक्षणयोर्न योगस्तात्पर्यशक्तेरपि न प्रसक्तिः ।

शब्दस्य तत्र ध्वननाभिधानव्यापार एषोऽभिनवश्चकास्ति ॥ इति

ननु वृत्तित्रयविवेके कृते किमपरमवशिष्यते यदर्थमनेकार्थेत्यादि(अनेकार्थस्येत्यादि) रुत्तरः

---

29 तथाचोक्तमिति प्राक्तननिबन्धकृतां परामर्शः । संग्रहश्लोककल्पोऽयं ध्वन्यालोकलोचनादर्वाचीने कुत्रापि निबन्धे स्यादिति वितर्क्यते ।

**एवं लक्षणामूलं व्यञ्जकत्वमुक्तम्। अभिधामूलं त्वाह—**

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥१९॥**

**"संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥**

(वा. प. २।३१७)

**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥"**

**इत्युक्तदिशा सशङ्खचक्रो हरिः, अशङ्खचक्रो हरि रित्युच्यते। रामलक्ष्मणाविति**

---

प्रबन्ध इत्यत आह **एवमिति**। सामान्यतो ध्वनेर्निरूपयितव्यस्य भूमिरचनमिदम्—तत्रा(त्र)र्थशक्तिमूलस्य 'सर्वेषां प्रायश' (८कः) इत्यादिना पूर्वग्रन्थेनाविवक्षितवाच्यस्य लक्षणा-मूलध्वननकथनेन कृतं, शब्दशक्तिमूलानुस्वानरूपस्य तु साम्प्रतं क्रियते। यद्यपि साऽभिधा-स्वरूपाऽभिधानानन्तरमेव तदर्हति तथापि लक्षणामूलोक्तन्यायव्युत्पन्नेन सुज्ञातमिदं प्रस्तूयते। यद्यपि च लक्षणामूलेऽप्यभिधाऽप्यस्ति मूलभूता तथाप्यसाक्षादिति विशेषः। अनेकाभिधानशक्ति[म]तोऽनेकार्थवाचकत्वनियन्त्रणमर्था(30a)न्तराद्व्यवच्छिद्य क्वचिदेक-त्राभिधाव्यवस्था। अत्र हेतुः **संयोगाद्यैरिति**। **व्यापृतिर्व्या**पारः। संयोगाद्यान् दर्शयति **संयोग** इत्यादि। प्रसिद्धार्थान्तरसम्बन्धेन क्वचिदभिधा विशेष्यमाणानियते वस्तुन्यवतिष्ठते यथा 'सशङ्खचक्रो हरि'रित्यत्र शङ्खचक्रसम्बन्धाद्धरिशब्दः सिंहाश्वसूर्यचन्द्रादिभ्यो व्यावृत्ता-ऽभिधाशक्तिरच्युते व्यवतिष्ठते भगवद्व्यक्तव्यतिरिक्तस्य तत्सम्बन्धाप्रतीतेः। एवं विप्रयोगेणापि **'अशङ्खचक्रो हरिः'**। 'प्रसिद्धिपूर्वकः प्रतिषेधो न चान्यत्र प्रसक्ति'रिति तत्रैवाभिधाया व्यव-स्थितेः। न च विप्रयोगानुपपत्तिः कादाचित्कस्य सम्भवति। साहचर्यं सहचरणप्रसिद्धिः, **"रामलक्ष्मणा"**विति द्वन्द्वबलात् सामान्यतः साहित्यावगतिः। प्रकारान्तरेण चेदन्यतर-प्रसिद्धिस्तदा संयोगोदाहरणमप्येतत्। **विरोधिता** बाध्यबाधकभावः सहानवस्थितिश्च। **[ रामार्जुनेति ]**-परशुरामेणापि पितृबधकोपात् सहस्रार्जुनबधः कृत इति प्रसिद्धिविरोधितया रामशब्दो दाशरथिप्रभृतिभ्यो व्यावृत्तः परशुरामेऽर्जुनशब्दस्तु पार्थादेरपेतः कार्तवीर्ये। **[ तयो रिति ]** तत्तुल्यचेष्टयोरत्यन्तवैरिणोः कयोश्चित् सादृश्येनोपनिबन्धात्। सहानवस्थितौ तु "च्छायातपाविवे"ति द्रष्टव्यम्। अत्र हि च्छायाशब्दः सत्त्वानवस्थितिप्रतिसंज्ञानादेव

**दाशरथौ। 'रामार्जुनगतिस्तयो'रिति भार्गवकार्तवीर्ययोः। 'स्थाणुं भज भवच्छिदे' इति हरे। 'सर्वं जानाति देव' इति युष्मदर्थे। 'कुपितो मकरध्वज' इति कामे। 'देवस्य पुराराते'रिति शम्भौ। 'मधुना मत्तः कोकिल' इति वसन्ते। 'पातु वो दयितामुख'मिति साम्मुख्ये। 'भात्यत्र परमेश्वर' इति राजधानीरूपाद् देशाद्राजनि। 'चित्रभानुर्विभाती'ति दिने रवौ, रात्रौ वह्नौ। 'मित्रं भाती'ति सुहृदि। 'मित्रो भाती'ति रवौ। इन्द्रशत्रुरित्यादौ वेदे एव न काव्ये स्वरो विशेषप्रतीतिकृत्।**

---

तेजोऽभावे[30]। (30b) अर्थः प्रयोजनम्, भवच्छेदस्य प्रयोजकत्वाद् भवच्छेदं प्रयोजनमुद्दिश्य सेव्यश्चेत्तदा **स्थाणु**शब्दः शङ्कोर्व्यावृत्तः परमेश्वर एव। **सर्वं जानाति देव** इति वक्तृश्रोतृबुद्धिस्थतालक्षणेन प्रकरणेन निर्जना (रा) द्व्यावृत्तो देवशब्दः पार्थिवे। यदि हि कश्चित् सम्बोध्य ब्रूते तदाऽयं नियमः। सम्बोधनं चानुवाद्यस्यैव। तदुक्तम् "सम्बोधनं न लोकेन (केऽनु) विधातव्येन वस्तुने"ति। अनुवादश्च प्रकरणमपेक्षते। तदिदमुक्तं युष्मदर्थ इति। **लिङ्गं** चिह्नं, कामस्य मकरचिह्नत्वात्। **शब्दस्येति** नियतार्थस्य **सन्निधिः** समभिव्याहारः। परमेश्वरगोचरतया नियतार्थेन पुरारातिशब्देन सामानाधिकरण्याद् देवशब्दस्तत्रैव। **सामर्थ्यं** शक्तिः। कोकिलमदे (मदने) वसन्तस्यैव सामर्थ्यमतो मधुशब्दः क्षौद्रादिव्यावृत्तस्तत्र। अर्हत्व**मौचिती**। उत्कण्ठितस्य मनोरथसिद्ध्यर्हत्वेन मुखशब्दस्योपायादिभ्यो व्यवच्छेदः। **देशो**ऽधिकरणं राजधानीमभिसन्धाय चेत् सर्वनामप्रयोगस्तदा परमेश्वरशब्दस्य जगत्कर्तृत्वव्यावृत्तिः। **कालः** प्रतीत एव। तेन दिवा रवेर्जाज्वल्यमानत्वाच्चित्रभानुशब्द उभयवाचकोऽपि रवौ नियम्यते, रात्रौ तु तस्यासम्भवा-

---

30 अत्रापि 'सहानवस्थितीति पाठः स्यात्'। परम् आदर्शपुस्तकस्थपाठे "ध्वान्तस्य वामोरुविचारणायां वैशेषिकं चारु मतं मतं मे" इति नैषधीयपद्ये तमस्तत्त्वनिरूपणार्थको ध्वान्तशब्द इवात्र च्छायाशब्दोऽपि प्रसिद्धकल्पः। 'द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तम'(५।२।१६) इति वैशेषिकसूत्रम्। न्यायकन्दलीकाराः श्रीधराचार्याः "भाभावे सति तमसः प्रतीतेर्भाऽभावस्तम" इति निरणैषुः। निरुक्तपदार्थे सत्त्वस्य द्रव्यात्मकस्याभाव इति तुच्छो भेदः। अभीद्धतपोमूलस्य तापसर्वस्वस्य सत्त्वस्यानवस्थितिलक्षणायाश्छायाया अनातपत्वेन संज्ञिताया एतदेव वैशिष्ट्यम्।

द्वह्निमभिधत्ते । "**व्यक्तिः**, प्रातिपदिकार्थव्यञ्जकं पुंस्त्वादि" "लुपि युक्तवद्व्यक्ति-(31a)वचन" (पा. १।२।५१) इतिवत् (रु. सं. १० ख)। **मित्र**शब्दः सुहृदि नपुंसक एव, रवौ तु पुमानेव । उदात्तादिरूपो वर्णधर्मः **स्वरः । इन्द्रशत्रु**रिति, अत्र हि षष्ठीतत्पुरुषे 'समासस्ये'- (पाः ६।१।२२३) त्यनेनान्तोदात्ते इन्द्रस्य शत्रुः शमयिता शातयिता वा प्रतीयते। यदा तु 'बहुव्रीहौ प्रकृत्या पूर्वपद' (पा. ६।२।१)मिति पूर्वपदोदात्तो बहुव्रीहिस्तदेन्द्रशत्रुर्यस्य सोऽयमिन्द्रशत्रुरिति, इन्द्र एवास्य शमयिता शातयिता वेति। "यद्यपि नोदात्तादिः काव्ये विशेषप्रतीतिनिमित्तं तथापि काकुर्विशेषप्रतीतिकृदेव भवति, यथा "मथ्नामि कौरवशतं समरे न कोपा"दिति (वेणी स० १।१५) "स्वस्था भवन्तु मयि जीवति धार्तराष्ट्रा"-(वेणी १।७) इति (च) (रु. सं. १० पृः)। ग्रन्थकृता त्वेतदग्रे सूत्रयितव्यमित्यभिप्रेत्योदात्तादिनिषेधः कृतः। क्वचित्तु स्वरकृतोऽपि विशेषो दृश्यते यथा—

सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां
दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः ।
रागं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद्भवन्ति दयिते शून्या ममान्धा दिशः[31] ॥ (सं. कं. १६४ पृः)

अत्र चरणतलपतिते मयि दृष्टे सति त्वं प्रसीदेति कुपितप्रियतमाप्रसादनपरमप्येतदन्तोदात्तं दृष्टे इत्यत्र सम्बुद्धावाद्युदात्ते प्लुतकरणेनेदं कुपितदृष्टिप्रसादनपरं भवति। एतदेवा(31b)भिसन्धायाह **वेद एवे**ति। यथा वेदे बहुलमुपयोगस्तथा न काव्ये, क्वचित्तु भवत्ये-वेत्यर्थः। तथा च पाठ्यगणेषु "हास्यशृङ्गारयोः स्वरितोदात्तं वीररौद्राद्भुतेष्वनुदात्त-

---

31 स्वरपदेनेह प्रकरणे काकोरुदात्तादित्रयस्य ह्रस्वदीर्घप्लुतात्मकस्य त्रिकस्य च सर्वस्यैव संग्रह इति साम्प्रदायिकाः। भोजेनास्मिन् श्लोके प्लुतस्वरकरणेनोपायविशेषेणा-र्थान्तरं सूचितमिति दर्शितम्। टीकाकृत्त्वत्र चातुर्येणोदात्तस्वरस्याद्यन्तो-दात्ताभ्यामपि तथा स्यादिति सूचयति । क्वाचित्कमपि नैतदतिविरलमिति तस्या-शयः। नाट्ये त्वभिनययोगत एतत् स्फुटीभवतीत्यग्रिमवाक्ये तात्पर्यम् । सरस्वती-कण्ठाभरणे चतुर्थचरणान्त्यभागे "सर्वा ममान्धा दिशः' इति पाठो दृश्यते । मम्मटभट्टास्त्वेतादृशानां काकुव्यतिरिक्तानां ग्रहणं नानुमन्यन्त इति वृत्तिस्थोदाहरणै-रापाततः प्रतिभाति। हेमचन्द्राचार्यास्तु काकोः पाठकमेऽन्तर्भावान्न मम्मटाद्युक्त-वक्रोक्तिसमाधायकत्वमिति वदन्तो मुनिमतमुद्धरन्ति, यत्रायं नाट्यशास्त्रीयोद्धार-स्यानुवादो दृश्यते-[ काव्यानुविवेके २३६ पृः(निः साः)]। हेमचन्द्रग्रन्थोऽपि श्रीधरेणावलोकितो भवेदिति सूचितमस्माभिरुपोद्धाते ।

आदिग्रहणात्

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहि अच्छिवत्तेहिं ।
एद्दहमेत्तावत्था एद्दहमेत्तेहिँ दिअएहिं ॥११

( स. क. आ. १६६ पृ: ; गा. स. वे. ९७३ )

इत्यादावभिनयादयः ।

इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य यत् क्वचिदर्थान्तरप्रतिपादनं तत्र नाभिधा, नियमनात्तस्याः। न च लक्षणा, मुख्यार्थबाधाद्यभावात्। अपि त्वञ्जनं व्यञ्जनमेव व्यापारः यथा—

भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥१२

(क. अ. १।३८)

---

कम्पितं करुणाबीभत्सभयानकेष्वनुदात्तस्वरितकम्पितमुत्पादयेत्"-( नाः शाः १७; निः साः १२७ पृः ) दित्युदात्तानुदात्तस्वरितकम्पितानामुपयोगो मुनिना दर्शितः ।

**एद्दहेति** इयन्मात्रस्तनीयन्मात्राभ्यामक्षिपत्राभ्यामुपलक्षिता । इयन्मात्रावस्थेयन्मात्रैर्दिवसैरिति । अभिमुखनयनात् संवादिवस्तुस्वरूपप्रकाशिका क्रिया**ऽभिनयः**। अयञ्चाङ्गिकवाचिकाहार्यसात्त्विकभेदाच्चतुर्धा । तत्राङ्गेन शिरोहस्तादिना नि र्वृत्त आङ्गिकः, वचनेन गद्गदस्वरविकारादिना वाचिकः, आह्रियमाणैर्मसीवेशस्त्रगुपस्कारादिभिः कृत आहार्यः, सत्त्वेन निर्वृत्तः सात्त्विक इति । **आदि**पदेनापदेशादयः । तत्रात्मनिर्देशिका क्रियाऽपदेशो यथा—इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् । विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥ ( कु. स. २।५५ ) इति । अत्रापि यावदात्मानमपदिश्यैवमभिहितवानिति नानुसन्धीयते तावन्न श्री[प्राप्ति]क्षययोः कारणविशेषः प्रतीयते । एवं "भर्तृदारिके, दिष्ट्या वर्धामहे यदत्रैव कोऽपि कस्या-(३२a)पि तिष्ठतीति मामङ्गुलिदलविलासेनाख्यातवती"-( मा. मा. १ अः )त्यादौ निर्देशादयोऽत्र द्रष्टव्याः ।

**भद्रात्मन** इति । भद्रः कल्याणप्रकृतिः, भद्रा हस्तिनां विशिष्टा जातिश्च । **वंशः** कुलं पृष्ठदण्डश्च । **शिलीमुखा** बाणा भ्रमराश्च । **गतिर्ज्ञानं** चलनञ्च । पराञ्छत्रून् वारयतीति **परवारणः** प्रकृष्टो हस्ती च । **दानं** त्यागो मदश्च । **करः** पाणिः स्थूलहस्तश्च । अत्र परवारणशब्दः प्रकरणाद्वर्त-(र्ण)नीये नियन्त्रिताभिधाशक्तिक इति व्यवस्था । ननु योऽयं द्वितीयः करिरूपोऽर्थः प्रतीयते स तावन्नाभिधया,

**तद्युक्तो व्यञ्जकः शब्दः—**

**तद्युक्तो व्यञ्जनयुक्तः ।**

**यत् सोऽर्थान्तरयुक् तथा ।**

**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥२०॥**

**तथेति व्यञ्जकः ।**

इति काव्यप्रकाशे शब्दार्थस्वरूपनिर्णयोनाम द्वितीय उल्लासः ॥

---

सकृदुच्चारितस्य नानार्थाभिधानानुपपत्तेः, अन्यथा "गावो वः पावनाना[32]( सू. श. ६ ) मित्यादौ नेत्रादेर[ न ]भिमतस्याप्यभिधानप्रसङ्गः स्यात् । न चावृत्तिकल्पनं मानाभावात् । नापि लक्षणया, यथोक्तसामग्रीविरहात् । न च [ न ] प्रतीयते, प्रतीत्यपलाप-प्रसङ्गात् । नापि तात्पर्यतः, पदमात्रगामित्वात् । नापि श्लेषमर्यादया, शक्तेर्नियमनात् । अतः पारिशेष्याद्ध्वननसिद्धिः । तदूचे '**अपि त्वञ्जन**'मित्यादि ।

एवं व्यञ्जनाव्यापारसिद्धौ प्रकृत उपयोजयति—**तद्युक्त** इति । तच्छब्देनाञ्जनपरामर्शेऽञ्जक इत्युपसंहारो युक्तो न तु व्यञ्जक इत्यत आह—**तद्युक्तो व्यञ्जनयुक्त** इति तदर्थमेव व्यञ्जनमिति पर्यायोप(32b)-न्यासः । ननु शब्दमात्रस्य चेदयं ध्वननव्यापारः शब्दार्थ-युगलं ध्वनिरिति कथं सङ्गच्छते ? न च सामान्यासम्भवे विशेष इत्यतः सूत्रं **यदि**ति । **स** इत्यनेकार्थः । **अर्थान्तरं** वाच्यरूपम् । **तथे**ति व्यञ्जकः । तेनायमर्थः—यद्यपि शब्दार्थ-युगलव्यापारो ध्वननं तथापि क्वचित् कस्यचित् प्राधान्येन निरूप्यत इतरस्य तु सहकारि-मात्रतया । तथाच शब्दशक्तिमूलादिव्यवहारः परस्पराऽसङ्कीर्ण उपपद्यत इति ।

इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते काव्यप्रकाशविवेके द्वितीय उल्लासः ॥

---

32 'दत्तानन्दा' इत्यादौ सूर्यरश्मिवर्णनप्रस्तावेऽयमंशः । अत्र गोपदेन रश्मीनां सुरभीनाञ्चाभिधानम्, न तु नेत्राणामनभिमतानाम् । ध्वननसिद्धेरिति—सा च ध्वन्यालोकीय-(२।२२) वृत्तिदर्शितदिशा स्थिता । अत्रोपमाध्वनिरिति सिद्धान्तः । पक्षान्तराण्यन्यैरुत्थापितानि लोचनकृता पराहतानि । युक्तिस्त्वित्थं "नन्वर्थ-भेदेन शब्दभेद" इति दर्शनादत्र शब्दद्वयमस्ति । तच्च साजात्याद्यैक्यभ्रमहेतुः । किं वृत्त्यन्तरकल्पनेने'ति चेन्न ।......अत्र हि शब्दद्वयकल्पने कथं प्रकृतार्थस्य प्रथमं प्रतीतिः, द्वयोरभिधेयत्वेन पूर्वपश्चाद्भावनैयत्यासम्भवात् । किञ्च द्वितीयार्थ-बोधने धर्मिकल्पनातो वरं धर्मकल्पनेति भिन्नशब्दकल्पनाद् भिन्नैव व्यञ्जनाख्या वृत्तिरङ्गीकर्तुमुचिते''ति विश्वनाथकृतकाव्यप्रकाशदर्पणे ।

## तृतीय उल्लासः

अर्थाः प्रोक्ताः पुरा तेषाम्

अर्था वाच्यलक्ष्यव्यङ्ग्याः। तेषां च वाचकलाक्षणिकव्यञ्जकानाम्।

अर्थव्यञ्जकतोच्यते।

कीदृशीत्याह—

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ॥२१॥

प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम्।

योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥२२॥

---

एवं शब्दस्य व्यञ्जकत्वं निर्णीय क्रमप्राप्तमर्थस्य व्यञ्जकत्वं दर्शयितुं तदुद्देशं स्मारयति सूत्रकारः—**अर्थाः प्रोक्ता** इति। 'शब्दार्थौ'वित्यत्रैकत्वेनार्थस्योपादानाद् गुणवचनासङ्गतिमाशङ्क्याह[1]—**अर्था** वाच्येति ( **वाच्या इति** )। तच्छब्दो नार्थपरामर्शकः, अन्यथाऽपि तत्प्रतीतेरिति व्याचष्टे **तेषाञ्च वाचके**ति। वाचकादिषु प्रतिपालितेषु तद्भावस्य वाच्यादिप्रतिबन्धादर्थत्रयमुक्तप्रायमित्यर्थः। ननु "सर्वेषां प्रायशः"(८ काः) इत्यादिनाऽर्थस्य व्यञ्जकता प्रकाशितैवेति पृच्छति **कीदृशी**ति। यद्यपि व्यञ्जकत्वमुक्तं तथाऽप्यर्थादर्थान्तरप्रतीतिर्भवन्ती नानुमानादृते स्यादिति ध्वननाभा-(33a)ववादिनो मतमपाकर्तुं वृत्तिभेदव्यवस्थापिका सहकारिसामग्री वक्त्रव्येत्युल्लासारम्भः। अतएव शब्दस्य सा पूर्वमुक्ता साम्प्रतमर्थस्योच्यत इति मत्वा सूत्रेऽर्थशब्दो वैशिष्ट्यादिति प्रत्येकमन्वयः। **प्रतिभा**त्वया ( ? **जुषा** )मित्यनेन ये नामानन्यपरायणास्तामेव भगवतीं प्रतिभामुपासत इत्युक्तम्। **वाक्यवाच्यान्यसन्निधि**रिति वाक्यवाच्यसहितोऽन्यसन्निधिरिति मध्यपदलोपी समासः। वक्त्रादिप्रतिसन्धानसमवहितनिस्तुषप्रतिभानवतोऽर्थादर्थान्तरप्रतीतिर्न वृत्तिभेदव्यवस्थापिका सहकारिसामग्रीत्युल्लासारम्भोऽयमन्तरेणेति सूत्रतात्पर्यम्। व्यज्यते यया सा **व्यक्ति**-

---

1 अत्र गुणपदेनावृत्तिरभिधीयते। तथाच "गुणो मौर्व्यामप्रधाने ... ... ...। त्यागशौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु"॥ इति मेदिनीकरः।

बोद्धव्यः प्रतिपाद्यः। काकुर्ध्वनेर्विकारः। प्रस्तावः प्रकरणम्। अर्थस्य वाच्यलक्ष्यव्यङ्ग्यात्मनः। क्रमेणोदाहरणानि—

अइपिहुलं जलकुम्भं घेत्तूण समागदह्मि सहि तुरिअं।
समसेअसलिलणीसासणीसहा वीसमामि खणं ॥१३॥
(गा. स. ? वे. ६८६)

अत्र चौर्यरतगोपनं गम्यते।

---

ध्वननव्यापारः। **एव**कारेण विधाऽन्तरविरहद्योतिना परमतनिराकरणं सूचितम्। तथा चैतत् सद्य उपपादयिष्यत इति भावः। शब्दस्य बोद्धव्यो वाच्य एव, स चानन्तरमुपात्त इति पुनरुक्तिं मन्यमान आह **बोद्धव्यः प्रतिपाद्य** इति। णिजर्थे धातुरिह वर्तते यथा 'नागरकवृत्तं वर्तेत'(का. सू. १।४।१) इति। तथा च शब्दप्रयोगस्य परार्थत्वाद् यद्यत्समवेता प्रतीतिरुत्पाद्या स बोद्धव्यः। **काकुरि**ति—तदुक्तं "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयत" (ना. शा. १७) इति। साऽनियतप्रतिबन्धाऽप्रतिबन्धा च। तत्राद्या वाक्यान्तरापेक्षिणी साकाङ्क्षा, वा-(33b)क्योत्तरभाविनी तु निराकाङ्क्षा। तयोः प्रथमाऽऽक्षेपगर्भा प्रश्नगर्भा वितर्कगर्भा च। द्वितीयाऽपि विधिरूपोत्तररूपा निर्णयरूपा च। अनियतप्रतिबन्धा त्वेकद्वित्रिचतुर्गुणेत्यादिकं तरतमनिर्देशविधिबोद्धव्यम्(श्रृ. प्र. ७म प्रकाश)। इह तु ग्रन्थगौरवभयान्न प्रतन्यते। **प्रकरण**मिति बुद्धिविशेषः। **अइपिहुल**मित्यादि—'अतिपृथुलं जलकुम्भं गृहीत्वा समागताऽस्मि सखि त्वरितम्। श्रमस्वेदसलिलनिश्वासनिःसहा विश्राम्यामि क्षणं'मिति। अद्येयमेकाकिन्येव गता श्रमः पुनरयं महानतः कोऽत्र हेतुरित्यन्यथा शङ्कमानया प्रतिवेशिन्या सख्या श्रमातिशयकारणं पृष्टाया इयमुक्तिः। तत्र पृथुलतया दुर्वहत्वम्। जलपूर्णः कुम्भो जलकुम्भ इति तत्रैव प्रकर्षः। गृहीत्वेति मयैवोत्थाप्य गृहीतो न त्वन्यया साहाय्यमाचरितमिति भूयानायासः। समागता न त्वन्तरा विश्रामकथाऽपि[तु] त्वरया गृहव्यापारपरायणत्वम्। त्वरितत्वेन स्वेदप्रकर्षः। सखीति नासमानहृदयः परपीडां जानातीति। तदिहान्वयनिमित्तभूते सर्वस्मिन् व्यापारे सुस्थितेऽपि येयमन्वयाद्बहिः कृतस्यार्थान्तरस्य प्रतीतिस्तत्र वक्त्र्या वैशिष्ट्यमेव सहकारिता। नहि वृद्धायां वक्त्र्यामर्थान्तरप्रतीतिः सम्भवति, तदानीं वाक्यार्थ एव विश्रान्तः। अर्थान्तरप्रतीत्ये(त्यै) तु प्रसिद्धाभि-(34a)धातात्पर्यातिरिक्तं व्यञ्जनमेव जागर्ति, शब्दव्यापारोपरमादेव चार्थस्य व्यञ्जकत्वे प्राधान्यम्। एवमुत्तरत्रापि सहकारिवैशिष्ट्या-

ओण्णिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअं ।
मह मन्दभाइणीए केरं सहि तुह वि अहह परिहवइ ॥१४॥

( गा. स. ? वे. ६५६ )

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥१५॥ (वेणी. सं. १।११)

अत्र मयि न योग्यः खेदः, कुरुषु तु योग्य इति काक्वा प्रकाश्यते। न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यं, प्रश्नमात्रेणापि काकोर्विश्रान्तेः ।

तइआ मह गण्डत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एण्हिं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी ॥१६॥ (गा. स. वे. ६३६)

---

दर्थस्य व्यञ्जकत्वमनुसर्तव्यम् । **ओण्णिद्द**मित्यादि—औन्निद्र्यं दौर्बल्यं चिन्ताऽलसत्वं सनिःश्वसितम् । मम मन्दभागिन्याः शङ्के (?)[2] सखि त्वामप्यहह परिभवति ॥ तुह इति "चतुर्थ्याः षष्ठी चे"त्यनुवृत्तेः "क्वचिद्द्वितीयादे"रित्यानुशासनाद्द्वितीयार्थे षष्ठी (सि. हे. ८।३।१३१; ८।३।१३०)। अत्रापि यदि निसर्गसद्भावप्रवृत्ता प्रतिपाद्या स्यात्तदाऽर्थान्तरप्रतीतिर्न स्याद्। अतः प्रतिपाद्याया वैशिष्ट्यस्य साचिव्यम् । **तथाभूता**मिति—अत्र **मयि भजति नाद्यापि कुरुष्वि**ति प्रश्नमोद्दीपनविचित्रतारूपा काकुः । ननु काकुप्रतिपादितमर्थान्तरं विना वाक्यस्यार्थसङ्गतिः

---

2 एवमपि कोशे पुटोपरि शोधितः पाठः । तत्र 'कृते' इत्यस्यैतः परं न स्थानं यथा रुचककृतसङ्केते । इयं छाया तद्विवरणं वेति नातिस्फुटम् । सङ्क(?)मिति रुचकसङ्केत उपलब्धपाठोऽपि तद्वत् । "सङ्गे कृते" इति भावलक्षणा सप्तमी स्यात् । चण्डीदासस्तु 'मह केरं मदीय'मिति विच्छिन्नमप्येकीकृत्य विवृणोति । श्रीविद्याचक्रवर्तिनोऽर्वाचीनाश्च बहवो 'मम कृते' इति परिवर्तयन्ति । तत्र केरमिति प्राकृतपदं कृतमित्यव्ययपर्यायमिति साहसिक्यमिव प्रतिभाति । छन्दःकारणकं शैथिल्यमित्यपि न साधु समर्थनम्, एतादृशस्य विरलप्रयोगत्वात् । मूलग्रन्थे तैलङ्गमातृकायां णिरिणद्दं...... । मह मन्दभाइणीएं कए सहि तुहं वि (Weber page 504) इति पाठो लक्ष्यते।

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूच्चलितायां तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं त इति व्यज्यते।

उद्देशोऽयं सरसकदलीश्रेणिशोभाऽतिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः।
किं चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥१७॥

( व. जी. ६२ पृः )

अत्र रतार्थं प्रविशेति व्यङ्ग्यम्।

णोल्लेइ अणोल्लमणा अत्ता मं घरभरम्मि सअलम्मि।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥१८॥

( गा. स. वे. ८७५ )

---

स्यात्, ततस्तत्साधकतया गुणीभूतव्यङ्ग्यत्वान्नायं ध्वनेर्विषय इत्याशङ्कां परिहरति—**प्रश्नमात्रेणापी**ति। कदाचिदेवमतिसम्भू-(म्भृ)तक्रोधे त्वयि स खिन्नः, न खिद्यते गुरुरिति सहदेववचनमाकर्ण्योद्दीपितामर्षस्य भीमसेनस्येयमुक्तिः। तत्र त्वामेव पृच्छामि किं मयि तव कोपो भवतीत्यादि प्रश्नमात्रम्। **तइआ** इत्यादि तदा मम गण्डस्थलनिमित्तां(तां) दृष्टिं नानैषीरन्यत्र। इदानीं सैवाहं तावेव कपोलौ न सा दृष्टिः॥ निमित्ता(तां) निक्षिप्ताम्। (**ते** अ इति) सर्वत्र प्राकृते ''द्वित्वे बहुत्व''मिति (सि. हे. ८।३।६०) स्मरणाद्बहुत्वम्। (34b) ''ननु वाक्यस्य कथमेतदेवोदाहरणम्, अन्यत्रा[पि] वाक्यस्यैव सामर्थ्याद्, आकाङ्क्षा-योग्यतासन्निधानवशात् परस्परसमन्वाहारो वाक्यमिति चेत् सोऽपि सर्वत्र विद्यते [इति] तत् कोऽत्र विशेषः? उच्यते। वाक्यसमन्वितेः प्रयोजकं पदमत्र वाक्यमुच्यते, यथाऽत्रैव 'तइआ एणहिं' इति। एवञ्च न सर्वत्रातिप्रसङ्गः'' ( रु. सं. १२ पृः )। **चलितायाम**िति-अन्यत्र गतायाम्। **उद्देशोऽयम**िति—उद्दिश्यत इति उद्देशः, तेनान्यजनसञ्चरणायोग्यता। **सरसकदलीश्रेणीशोभाऽतिशायी**त्यादिनोद्दीपनप्रकर्षः। कुञ्जस्योत्कर्षोऽतिशयितलता-गहनत्वादि प्रतिमुहूर्तप्रवर्तितातुक (नेक)पुष्पामोदादिमुदितमधुकरनिकरत्वादिकञ्च, तेनाङ्कुरितो रमणीनां विभ्रमो यौवनस्वभावजश्चेष्टाविशेषो यत्रेति। नर्म ददातीति **नर्मदा**। **सुरत-सुहृद** इति रतश्रमनिमित्तघर्मशीकरापहरणादिरूपसुकृतकार्यकारित्वात्। प्रत्युपकारसापेक्ष-तया हितकरणप्रवृत्तौ मित्रम्, एतन्नैरपेक्ष्येणोपकारकरणशीलः सुहृदिति। **तन्वी**ति—प्रकृतिरमणीयतापरेणामन्त्रणेन कृशतानिबन्धनं सौकुमार्यमात्मविधेयत्वञ्च नायिकायाः

अत्र सन्ध्या सङ्केतकाल इति तटस्थं प्रति कयाचिद्द्योत्यते ।

सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण ।
एमे अ किंत्ति चिट्ठसि ता सहि सज्जेसु करणिज्जं ॥१९॥
( गा. स. वे. ६६२ )

अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कयाचिन्निवार्यते ।

अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥२०॥

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाऽभिसार्यतामित्याश्वस्तां प्रति कयाचिन्निवेद्यते ।

गुरुअणपरवस पिअ किं भणामि तुइ मंदभाइणी अहकं ।
अज्ज पवासं वच्चसि वच्च सअं जेव्व सुणसि करणिज्जं ॥२१॥
( गा. स. वे. ८५१ )

---

सूच्यते । त इति तद्रूपतया प्रसिद्धाः । वान्तीति वर्तमानप्रत्ययेन प्रारब्धापरिसमाप्तेः । अग्र इति—अग्रेसरत्वेन कामस्यानुचरत्वं वातानां तु प्रभुत्वम् । मनोभूरिति त·(35a)स्य सर्वज्ञताकलिताकस्मिकरोष इत्युज्जृम्भमाणता, ततस्तद्बाणप्रहारस्य दुःसहत्वम् । तदित्थमन्वयव्यतिरेकाभ्यां वाच्यस्य वैशिष्ट्यम् ।

णोल्ले[इ] इत्यादि—प्रेरयत्यानार्द्रमनाः श्वश्रूर्मां गृहभरे सकले । क्षणमात्रं यथा सन्ध्यायां केवलं भवति न वा भवति विश्रामः ॥ गृहभरे सकल इति [न]प्रयत्नशतेनाप्यवकाशः । मामिति काकाऽनुकम्प्यता । अनार्द्रमना श्वश्रूरित्यनेन सर्वथैवानिभृतसम्भोगसाहसाङ्गीकारपरिहारः, "यद्यपि सन्ध्यासमयेऽवकाशो भवत्येवेति विवक्षितं तथापि तदुच्यमानं परस्य लक्षणीयं भवतीति तथा नोक्तम् । अत्र चान्यस्तटस्थः परपुरुषः" (रु. स. १२पृः) । सुव्वइ इत्यादि—श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण । एवमेव किमिति तिष्ठसि तत् सखि सज्जय करणीयम् ॥ सज्जय सज्जं कुरु । यद्यपि प्रोषितत्वेन प्रस्तुतप्रच्छन्नरहस्यप्रत्यूहहेतुतया वा यास्यतस्तस्याप्रियत्वमेव तथापि तव 'प्रिय' इत्यभिधानमन्यगोपनाभिप्रायेण सखीं प्रति सोल्लुण्ठमेव । तदिह वक्तृप्रतिपाद्यैकबुद्धिस्थि(स्थ)तालक्षणस्य प्रकरणस्य वैशिष्ट्यम् । अन्यत्रेत्यादि—अत्र सखीं लक्ष्यीकृत्य वाक्यार्थ(वाच्यार्थः) स्फुट एव, रहस्यवयस्यां प्रति तु व्यङ्ग्यम् । अत्रेति सविशेष्य(कालस्य) साचिव्यम् ।

गुरुअणेत्यादि—गुरुजनपरवश(35b)प्रिय किं भणामि त्वां मन्दभागिन्यहम् । अद्य प्रवासं व्रज स्वयमेव जानासि करणीयमिति । 'जन'पदेन बहुत्वपरेण धाराऽधिरूढाऽनुराग-

अत्राद्य मधुसमये यदि व्रजसि तदाऽहं तावन्न भवामि, तव तु न जानामि गतिमिति व्यज्यते।

आदिग्रहणाच्चेष्टाऽऽदेः। तत्र चेष्टाया यथा—

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम्।
आनीतं पुरतः शिरोऽंशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते ॥२२॥

अत्र चेष्टया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते।

---

स्वरूपापरिचयाद् ग्राम्यत्वनीरसत्वादिकं तेषां प्रकाश्यते। प्रियपदेन त्वदायत्ता मम प्राणा इति दर्शयति। किं भणामीत्युपालम्भमात्रस्याप्यविषयत्वम्। अथ(था)वचनीयस्यानर्थरूपस्य झटिति साक्षात्कार एव भावीति भावः। एतदेव बुद्धिस्थीकृत्याह मन्दभागिन्यहमिति प्रवासं व्रजसि व्रजेति त्वदीयगाढ़तरमन्युरूपाभिप्रायावेदनेन विधिरयं निषेधे पर्यवसायीति प्रतीयते। तदिह यस्य क्षणमात्रमपि विच्छेदोऽतिदुःसहस्तस्य प्रवासः; सोऽप्यद्येति। यद्यपि जलधरसमयोऽप्येवं तथापि तस्य सन्तापशान्तेरपि हेतुभूतत्वात्, ततोऽप्ययमतिदारुणः समुपस्थितो वसन्तर्तुरित्युद्दीपनप्रकर्षधाराऽधिरूढ़स्य काल[स्य] वैशिष्ट्यं व्यङ्ग्यं प्रति निमित्तम्। तव तु न जाना[मि गति]मिति गुरुजनाज्ञाभङ्गभीरुताऽङ्गीकृतप्रधानसाहस-प्रस्तावनाऽनुमितधैर्यावलम्बनेन पृथग्भावमिवाशङ्क्य। वस्तुतस्तु प्रस्तुतविरहदहनदह्यमान-मानसभासमानैकतयोरैकात्म्यात्। यौवने किल योषितां लीलाविलासविभ्रमविच्छित्ति-(36a)किलकिञ्चितमोट्टायितकुट्टमितविब्वोकललितविकृताख्या दश स्वभावजाश्चेष्टाः[3]।

---

3 स्वभावजानां चेष्टानां सामान्यतः संज्ञिरूपेणोद्देशः। आसां विवेचनं प्रकृतग्रन्था-वयवे 'तेषामन्यत्र विस्तर' इति महाजनानुगृहीतरीत्याऽप्रकृतमिति न कृतम्। टीकाकृता नासम्पूर्णं नानपेक्षितं च विवरीतुकामेनात्राकराद्वयोरेतयोर्विवृतौ कारिकाद्वयी इतरत्र च प्राचीनानुजीविनां निबन्धकृतां वचनान्यनुसृतानि। इदमीयं विभ्रमस्य विस्तृतलक्षणं भोजराजग्रन्थानुसङ्कलयित्रा प्रकाशवर्षेण कृतं स्यात्। 'स्त्रीणामाद्यप्रणयवचनं विभ्रमो हि प्रियेष्वि'ति समर्थयितुकामेन कविगुरुणा कानिचि-द्विभ्रमलक्षणानि तत्रैव पद्ये लक्षितानि। लीलोदाहरणतयोद्धृता गाथा प्रतीक-स्मृता त्वित्थं पठ्यते – जं जं करेसि जं जं जप्पसि जं जं तुमं णिरोच्छेसि। तं तमणुसिक्खरीए दीहो दिअहो ण संपडइ॥

**निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया च पुनः पुनरुदाह्रियते। वक्त्रादीनां मिथःसंयोगे द्विकादिभेदेन। अनेन क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्व-मुदाहार्यम्।**

---

तत्रानुरागोद्रेकात् "प्रियकृतानां वाग्वेषचेष्टानां शृङ्गारिणीना सङ्गराभि(-मङ्गनाभि)रनुकरणं लीला" (द. रु. २।३७ वृः) यथा जं जं कुणेसि तं तं (जं जं) जप्पसि (गा. स. ४।७८) पतिविलोकनादिकालेऽङ्गे क्रियायां वचने च सातिशयविशेषोत्पत्तिलक्षणो विलासः (द. रु. २।३८)। तथा च मुनिः—

स्थानासनगमनानां हस्त-(वक्त्र-) भ्रूनेत्रकर्मणाञ्चैव।

उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात्॥ इति

(ना. शा. २२।१५ नि. स)

यथा **द्वारे**त्यादि। **उपान्त**पदेनैकदेशवृत्तिता, **निरन्तर**पदेन प्राप्तप्रायसन्निधानत्वं, **मयी**ति स्वरूपमात्रमुपयुक्तं, न तु व्यापारान्तरादिकमतोत्यानुरागोद्रेकस्य प्रकर्षः शृङ्गाररससर्वस्वायमान-लज्जाऽनुभावेन शिरोऽंशुकपुरःसमानयनेन बाहुमूलस्तनकलसादिव्यक्तीभावावेदको मनागुन्मिष-तीति जातिः। एवं विभ्रमादिचेष्टानामपि व्यञ्जकत्वम्। तथा चोक्तम्—

अङ्गभङ्गविकारेण सकटाक्षनिरीक्षणैः।

केशसंयमनव्याजाद्बाहुमूलप्रकाशनैः॥

मेखलाऽनुप्रकटनैः स्तननाभिप्रकाशनैः।

अभिलाषप्रकटनं विभ्रमः परिकीर्तितः॥ (रसार्णवालङ्कारे) इति।

असमाप्तमण्डनता विच्छित्तिः। यदाह—माल्याच्छादनभूषणविलेपनानामनादरन्यासः (36b) स्वल्पोऽपि परां शोभां जनयति यः सा तु विच्छित्तिः (ना. शा. २२।१६ निः साः) स्मितहसितरुदितश्रमरोषभयादीनां साङ्कर्येण प्रकटनं किलकिञ्चितम्। इष्ट-जनस्य "कथाऽऽदिषु प्रियानुरागेण भावितान्तःकरणत्वं मोट्टायितम्" (द. रू. २।४० वृः) आलिङ्गनाधरखण्डनादि पीडा [-स्वन्तर्हर्षः] कुट्टमितम्। इष्टार्थप्राप्तावपि गर्वादनादरो विव्वोकः। हस्तपादनेत्रभ्रूप्रभृतीनां सुकुमारविन्यासो ललितम्। "प्राप्तावसरस्यापि वाक्यस्य व्रीडया यदवचनं तद्विकृतम्" (द. रू. २।४२ वृः)।

**निराकाङ्क्षे**ति—तत्सहकारिविशेषसमवधानादवाधितानेकलक्ष्यसन्दर्शनेन शिष्याः सुशिक्षिता अक्षीणवैचक्षण्याः प्रगल्भन्तो झटिति घटित[वि]प्रतिपत्तयो दुर्दुरूढा(श्च)

**शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः।**
**अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥२३॥**

**शब्देति-न हि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः।**

इति श्रीकाव्यप्रकाशेऽर्थव्यञ्जकतानिर्णयो नाम तृतीय उल्लासः।

---

मुद्रिताननाः सम्पद्यन्त इति पौनरुक्त्यभ्रमं निरस्यति। एवं तर्हि सर्वत्र निवेदनं प्राप्नोतीत्यत आह—**प्राप्तावसरतयेति। मिथः संयोग** इति[4] तत्र वक्तृबोद्धव्ययोगे यथा—

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि।
मा पहिअ रत्तिअन्धअ सेज्जाए महण मज्जिहिसि ॥ (गा. स. ७।६६)

श्वश्रूरत्र शेते अत्राहं दिवसकं विलोकय। मा पथिक रात्र्यन्ध शय्यायामावयोः शयिष्ठाः ॥ 'महण' इति निपात आवयोरित्यर्थे। ममेति व्याख्यायमाने व्यङ्ग्यस्याभिधेयत्वमिव स्यात्। अत्र वक्तृप्रतिपाद्ययोः प्रवृद्धमदनावेशत्वेन(37a) दैशिक्या पान्थोऽनेन निषेधद्वारेण तथाऽभ्युपगत इति निषेधाभावोऽत्र विधिः, न तु निमन्त्रणरूपोऽप्रवृत्तप्रवर्तनात्मा, सौभाग्याभिमानखण्डनापदेशात्। अतएव रात्र्यन्धेति समुचितसमयसम्भाव्यमानविकाराकुलत्वं ध्वनितम्। अत्रैवाहमिति काका (वाक्यात्) सौन्दर्यगर्वादिकं व्यज्यत इति त्रिकादिभेदताऽपि। अतएवाहमित्यभिनयविशेषणात्मदशाऽऽवेदनाद्विधिरत्र शाब्द इति य[द]त्र भट्टनायकेनोक्तं तदपि निरस्तम्। न ह्यहमिति शब्दस्य साक्षादयमर्थः, काक्वादिसहकारितया तु ध्वननमेव व्यापार इति। एवमन्येऽपि द्विकभेदास्त्रिकादिभेदाश्च स्वयमुन्नेयाः।

---

4 उल्लासस्यान्तिमेऽंशे पाठोऽनवस्थितो विपर्यस्तप्रायश्च प्रतिभाति। पाश्चात्त्यैष्टीकाकृद्भिः स्वीकृता 'शब्दप्रमाणवेद्योऽर्थ' इत्यादिका कारिका ग्रन्थकृद्रचनाशैल्याऽनाघ्रातेवानुमीयमानाऽतिप्राचीनाभ्यां रुचकश्रीधराभ्यां न पठितेति प्रतीयते। माणिक्यचन्द्रेणार्वाचीनैश्च कैश्चिद् गृहीता 'अत्ता एत्थे'ति गाथा नात्र मूलग्रन्थस्यान्तर्भूतेति प्राचीनानां तदवतारयितॄणामपि निर्देशतोऽवगम्यते। नापि मूलग्रन्थकृतां पञ्चमोल्लासीयवाक्यमेतद्गाथोपस्थापनपुच्छभूतमस्या अत्र पाठे कथमपि प्रमाणम्। गाथाया अस्या व्याख्याने श्रीधरो ध्वन्यालोकलोचनं रुचककृतसङ्केतश्चानुवदति।

"तदेवं यद्यपि द्वितीयोल्लासे प्रयोजनस्य व्यङ्ग्यत्वसमर्थनेनाविवक्षितवाच्याख्ये द्विप्रभेदे ध्वनौ शब्दस्यादौ व्यञ्जकत्वं प्रतिपादितं तदनु विवक्षितान्यपरवाच्याख्यस्य तथापि ध्वनिभेदस्य संलक्ष्यक्रमव्यङ्ग्यप्रभेदेऽर्थस्य विभावादिरूपस्य व्यञ्जकत्वमग्रे वक्ष्यतीति नाव्याप्तिर्व्यञ्जकत्व-निर्णयस्येति[5]।" (रु. सं. १३ पृः) यदि वा 'व्यक्तिरेव से'त्यनन्तरं 'चित्तवृत्ति-विशेषस्य रसादेः प्रतिपित्सया। विभावादिभ्य एषाऽभिव्यक्तिरर्थसमाश्रये'ति कारिका पठनीया।" (रु. स. १३ पृः)

इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते काव्यप्रकाशवि(36b)वेके तृतीय उल्लासः॥

---

5 यस्तु रुचकस्य 'संलक्ष्यक्रमव्यङ्ग्यभेदेऽर्थस्य विभावादिरूपस्य व्यञ्जकत्वस्यानुक्तत्वादव्याप्तिर्व्यञ्जकत्वनिर्णयस्येति चिन्त्यमेतदि'ति स्वमताविष्कारस्तत्र श्रीधरकृता ग्रन्थसमर्थनचेष्टा नातिक्लिष्टाऽपि न निर्बन्धवतीति नावद्यमनुमानम्। ग्रन्थकारं वाग्देवताऽवतारं मन्यमानास्तदीयं मानुष्यमपह्नुवाना इव मूलपाठमपौरुषेय-शब्दकल्पं गृह्णन्तो नैतत् सहन्ते। न तावदत्र ग्रन्थपाठ उच्छिन्नो रुचकेन ग्रन्थकृदासन्नदेशकालवर्तिना स्वमुखेन घोषितो यस्य स्वकीयस्यालङ्कारसर्वस्वस्य पाठविषये तदनतिदूरवर्तिना जयरथेन यथाऽवधारितम्। अस्मिन्नर्थे रुचकभणितिभङ्गेयव प्रमाणम्।

## अथ चतुर्थ उल्लासः

**यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालङ्काराणां स्वरूपमभिधानीयम्, तथापि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्य-भेदानाह—**

---

शब्दार्थौ तावन्निर्णीतार्थौ, इदानीन्तु दोषादयः क्रमप्राप्तास्तद्गतस्थान(म)तिक्रम्य ध्वन्यादि-विवेचनमित्यत आह **यद्यपी**ति। "तददोषा"विति (१म उः) सामान्येन 'इदमुत्तम'-(१म उः) मित्यादिना च विशेषेण[1] यद्यपि धर्मी प्रदर्शित एव, तथापि यावदवान्तर-प्रभेदा न प्रदर्श्यन्ते तावत् स न सम्यक् प्रदर्शितो भवती"-(रु. सं. १४)त्यभिप्रेत्याह— **धर्मिणि प्रदर्शित** इति। दोषगुणालङ्काराणां तत्त्वं ध्वन्येक[नि]रूपणीयमेव। तथाहि काव्यात्मनि रसे ये हेयास्ते दोषाः, समवायवृत्त्या ये तमुपादेयत्वेनावलम्बन्ते ते गुणाः, ये-ऽङ्गद्वारेणोपकुर्वन्ति तेऽलङ्कारा इति यथायथं प्रतीयमानार्थव्यवस्थित एवायं मार्गः। तदिदमुक्तं **हेयोपादेयता ज्ञायत** इति। न च वाच्यम्, अलक्ष्यक्रममात्र तर्हि विविच्यता-

---

1 एवमेव प्राचीनाः प्रामाणिकाश्च टीकाकृत एतत्सूत्रद्वयप्रसक्तिं विभजन्ति। अलङ्कारनिबन्धकृतोऽप्येवमनुरुन्धानाः स्वमतमाविष्कुर्वन्तीतीतरत्रास्माभिः प्रप-ञ्चितम्। न हि स्वरूपमित्युक्ते स्वमितरव्यावर्तकमन्वयव्यतिरेकादितार्किकनय-सिद्धमेकान्ततस्तैरुद्दिष्टम्। 'तददोषावि'ति कारिकाया विवेचने साम्प्रदायिकै-र्वैतण्डिकैर्मल्लयुद्धमाविष्कुर्वद्भिर्यदायासितमेतस्मिन् स्वीकृते तस्यावसानं स्यात्। वस्तुतस्तु तत्त्वादप्रच्युतो धर्मी, स्वरूपमात्रो हि धर्मः, धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्चयत इत्यादिदार्शनिकनयभित्तिमुरीकृत्यैव प्राचीनालङ्कारिकाणां धर्मिधर्मगतत्वेन काव्यलक्षणनिष्पत्तिः। काव्यात्मस्थापने निबन्धस्तु नानादिकालीनः। सिद्धेऽपि तस्मिन्निबन्धकृतः प्राचीनमतनियन्त्रितां सरणिं न जहतीति प्रकटितश्च तद्विचक्षणै-र्विवरणकारैः। एवमप्यस्मिन् विवेके परिणामपदार्थव्याकरणम् "अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणाम"इति साङ्ख्यसिद्धान्तमनुवदति। तार्किकमतोत्थपरिवृत्तिसहत्वासहत्वाभ्यामाश्रयाश्रयित्वपक्षस्योपमर्दस्तयोरेकत्रैव ग्रन्थे विभिन्नधा स्वीकरणञ्चालङ्कारनिबन्धकाराणां केषाञ्चिद्विचित्रा शैली प्राचीन-मतानुरोधनिमित्तका।

अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ ।
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥२४॥

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्यविवक्षितं वाच्यं यत्र स ध्वनावित्यनुवादाद् ध्वनिरिति ज्ञेयः। तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितं यथा—

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥२३॥

( रु. का. अ. ६।१५ )

अत्र वचनाद्युपदेशादिरूपतया परिणमति। क्वचिदनुपपद्यमानतयाऽत्यन्तं तिरस्कृतं यथा—

---

मिति, यस्मादभिधाव्यतिरिक्ता शब्दस्य वृत्तिरेव नास्ति, कुतः क्रमः, कुतस्तरां तदुपलक्षणमिति, अतोऽवश्यं क्रमाक्रमौ विभावादिभङ्ग्या प्रतिपाद्य स्थापनीयाविति सर्वमवदातम्। काव्यपदं तद्विशेषध्वन्यादिपरम्। भिद्यत इति **भेदः** प्रकारो, भिद्यतेऽनेनेति विशेषलक्षणञ्च विवक्षितम्।

तत्रोद्देशक्रमेण ध्वनेः प्राग्विवेचनम्। स हि द्विविधोऽभिधामूलो लक्षणामूलश्च। यद्यप्यभिधा-(38a) मूलः प्राग्विवेक्तुं युक्तस्तथापि प्रागुक्तानुसारेण (१४ काः) लक्षणामूलमाह-**अविवक्षितवाच्य** इति। व्यञ्जकमुखेनायं ध्वनेर्विवेकः। तत्राद्ये शब्दस्य व्यञ्जकत्वमर्थस्य तु सहकाहिता, अज्ञातार्थस्य शब्दस्याव्यञ्जकत्वात्। एवं विवक्षितान्यपरवाच्येऽर्थस्य व्यञ्जकत्वं शब्दस्य तु सहकारितेति। अविवक्षितत्वन्तु क्वचिदनुपयुज्यमानत्वेनासामर्थ्याद्भवति, असामर्थ्येनैवान्वयबाधात्। पूर्वत्र **वाच्यमर्थान्तरे संक्रमितं** परिणमितं **संक्रमितमिति** सूत्रे णिचा निर्देशः काकादिसहकारिप्रयोजकतामाविष्कर्त्तुम्। अत्र हि वाच्यस्यानुपपत्त्यभावादनुवृत्ति (त्त) धर्मरूपतया लक्ष्यप्रतीतिवेलायां न परित्यागः, किन्तु तत्सहितस्य लक्ष्यस्य प्रतीतिः, अतएवात्र परिणामोक्तिः। तत्त्वादप्रच्युतस्य धर्मिणोऽवस्थाऽन्तरगमनं हि परिणामः। उत्तरत्रानुपपद्यमानत्वाद्वाच्यस्यात्यन्तं तिरस्कारः। यस्मिंश्चार्थान्तरे वाच्यं परिणमितं तद्व्यङ्ग्यभेदेन व्यपदिश्यते। धर्मरूपं (पे) लक्ष्यं(र्थ्य) व्यङ्ग्यस्य तदतिशयमात्रस्वभावत्वादित्युक्तं **गूढ[व्यङ्ग्य]प्राधान्य** इति। "एतदर्थं 'तच्च गूढमगूढञ्चे'ति (१३का) पूर्वं प्रयोजनस्य भेदेन निर्देशः।" (रु. सं. १४पृः) **ध्वनावित्यनुवादात्** (38b)

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥२४॥

एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति ।

विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।

अन्यपरं व्यङ्ग्यनिष्ठम् । एष च—

कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥२५॥

अलक्ष्येति न खलु विभावानुभावव्यभिचारिण एव रसः, अपि तु रसस्तै-रित्यस्ति क्रमः, स तु लाघवान्न लक्ष्यते ।

---

**स ध्वनिरिति ज्ञेय** इति योजना । **तत्र चे**ति—अविवक्षितवाच्ये ध्वनौ क्वचित् (क्वचिद्-) सकृदुपात्तमेव सामान्यपदं विशेषं लक्षयति । यथा—

एमेअ जणो तिस्सा देइ कवोलोपमाइ ससिबिम्बं ।
परमत्थविआरे उण चंदो चंदो विअ वराओ ॥ ( ध्व. आ, ३।१० )

इत्यादि । अत्र प्रथमचन्द्रपदस्य द्वितीयचन्द्रपदार्थेऽनुगमात् कलङ्कोपहतत्व-क्षयित्व-दिवा-धूसरत्वादिविशिष्टलाभः ( भे ) प्रकृतपोषकत्वमिति । **अस्मी**त्यस्मदर्थानुवादो निपातः । **समवायः** सभा । "अत्र यं प्रति वक्तुमारब्धं तं प्रति वक्तव्यवस्त्वेव कथनीयमिति वच्मीत्यपार्थत्वादनुपयुज्यमानम् । **उपदेशादिरूपतये**ति—उपदेशस्य लक्ष्यत्वेऽसंविज्ञान-पदनिबन्धनावश्यग्राह्यत्वाद्यतिरिक्तातिशयत्वं व्यङ्ग्यत्वम् । एव**मुपकृतमि**त्यादावुपकार(कृत)-सौजन्य(सुजनता)-सुखितत्वादिभिर्यद्यपि वैपरीत्यादपकारदौर्जन्यदुःखितत्वादयो लक्ष्यन्ते तथापि तेषामेव सातिशयत्वप्रतिपादनाद्विशिष्टानामेव व्यङ्ग्यत्वव्यवहारः । वक्त्रादिवैशिष्ट्या-दयश्चेह यथा मुख्यार्थबाधकास्तथा ( २१-२२काः ) प्रागुपपादितम्" ( रु. सं. १४ पृः ) ।

अथाभिधामूलमाह—**विवक्षित**श्चेति । **स** इति—ध्वनिरनुषज्यते विवक्षितत्वेन बाधितत्वात् । **अन्यपरं** व्यङ्ग्यतात्पर्येण विवक्षितं न तु प्रत्यावृत्त्य गुणी-(39a)भूत-व्यङ्ग्यन्यायेन वाच्योन्मुखमित्यर्थः । एवञ्चेति ( **एष चेति** ) अभिधापृष्ठध्वननोट्टङ्कनेन क्रम-व्यवस्थायां यद्यपि लक्षणामूलेऽपि क्रमोऽस्ति, तथापि तस्य लक्ष्यैकरूपत्वान्न प्रकारचिन्ता । **अलक्ष्यक्रमं व्यङ्ग्यं** यत्र समुदाये स तथा—एवं **लक्ष्यक्रमो**ऽपि । बहुप्रपञ्चतया चालक्ष्यक्रमस्य प्रागुद्देशः । ननु वाक्यश्रवणानन्तरं विभावानुभावव्यभिचारिण एव प्रतीयन्ते न त्वन्यत्, ते चाभिधेया इति क्व व्यङ्ग्यं क्व चाक्रम इत्यत आह—**न खल्वि**ति ।

यस्माद्विभावाद्यन्यतमस्तत्समुदायो वा रस[2] इति ये मन्यन्ते ते भ्रान्ताः, रसादीनां विभावादि-रूपवाच्यसामर्थ्याक्षिप्तत्वात्। तदेतदाह—**अपि त्विति**। एवञ्च विभावादिप्रतीत्युत्तर-कालं रसादिप्रतीतिरिति विभावादिप्रतीतिः(तेः) कारणत्वेन रसादिप्रतीतेश्च कार्यत्वेन व्यवस्थापनात् क्रमोऽत्रावश्यम्भावीत्याह—**इत्यस्ति क्रम**[3] इति। न चानुपलम्भमात्रेण व्यतिरिक्तावधारणं शक्यमित्यत आह—**स त्विति**। तीव्रसंवेगितया विभावादिप्रतीतेर्झटिति रसप्रकाशाद्विद्यमानोऽपि क्रमो न गृह्यते पद्मपत्रव्यतिभेदवत् परचित्तवृत्त्यनुमानवत्त्वात् (मानवत् ?)।

**भावशान्त्यादिरिति**। "रसस्य त्वेकध्वनि (घन) निरन्तरायप्रतीतिचर्वणीयत्वान्नि-रतिशयस्य शान्त्याद्यतिशयाभावः। अतएव विरोधाङ्गाङ्गिभा-(39b)वौ रसस्यासम्भविनौ तत्स्थायिभावो(भाव)गतत्वेन कैश्चिद्व्यवस्थापितौ" (रु. सं. १४)। मन्दावस्था भावा

---

2 उद्भटादिमतमुद्दिष्टमत्र। तथाच काव्यालङ्कारसारलघुवृत्तौ "यदुक्तं भट्टोद्भटेन 'पञ्चरूपा रसा' इति।…एतेषाञ्च स्वशब्दादीनां पञ्चानां समस्तव्यस्ततयाऽऽस्पदत्वात् येन काव्येन स्फुटरूपतया शृङ्गारादिरसाविर्भावो दर्श्यत" इति (४६-५०)। एतन्मतध्वंसो ध्वन्यालोके (२४-२६ पृः)। अग्रेऽपि 'पूर्वाचार्या' इति 'एवं विभावादय एव रसा' इति, 'अन्यतमेनैव रसनिष्पत्तिरिति ये मन्यन्ते' इत्यादयो-ऽप्यनेन व्याख्याताः (का. अ. सा. सं. ४।४४)।

3 एतच्च नासम्प्रदायसिद्धः सिद्धान्तः। 'एवंवादिनि देवर्षा'विति कुमारपद्य आनन्दवर्धनेन स्वयमेव कण्ठतो लज्जाऽऽख्यव्यभिचारिभावलक्षणो ध्वनि 'र्न चायम-लक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेर्विषय' इति सन्दर्भे स्वीकृतः। यद्यपि तत्र ध्वन्यालोक-ग्रन्थे 'यत्र साक्षाच्छब्दनिवेदितेभ्यो विभावानुभावव्यभिचारिभ्यो रसादीनां प्रतीतिः स एवासंलक्ष्यक्रमस्य मार्ग' इति भेददृष्ट्या रसादिसामान्यव्यङ्ग्यादेवं-विधोदाहरणस्य स्थलमित्यापाततः प्रतीयते, तथापि 'रसभावतदाभासतत्-प्रशान्त्यादिरक्रम' इति सामान्यत्वेनैव विधानाद् 'रसादिरर्थो हि सहेव वाच्येनाव-भासते' इति च कण्ठत उक्त्या, 'इवशब्देनासंलक्ष्यता विद्यमानत्वेऽपि क्रमस्य व्याख्याते'त्यभिनवगुप्तसमर्थनेन प्राचीनानां ध्वनिवादिनामप्यत्र न वैमनस्यम्। लोचन-कृतां मतोद्धारद्वारा नवीनालङ्कारिकवर्येण पण्डितराजजगन्नाथेन च 'स्यादेतत् यद्ययं रसादिः संलक्ष्यक्रमस्य विषयः स्यादि'ति स्पष्टमेवोद्घोषितम्। 'न खलु धर्मिग्राहक-मानसिद्धं रत्यादिध्वनेरलक्ष्यक्रमव्यङ्ग्यत्व'मिति हि तन्मतावतरणिकागर्भा युक्तिश्च।

तत्र च

रसभावतदाभासभावशान्त्यादिरक्रमः।
भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः ॥२६॥

आदिग्रहणाद्भावोदयभावसन्धिभावशबलत्वानि। प्रधानतया यत्र स्थितो रसादिस्तत्रालङ्कार्यो यथोदाहरिष्यते। अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेयऊर्जस्विसमाहितादयोऽलङ्काराः। ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते। तत्र रसस्वरूपमाह—

कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥२७॥
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥२८॥

---

बहुलावस्था रसा इत्यादिना ग्रन्थकारोऽप्यग्रे वक्ष्यति (का. ३५)। "**अक्रम** इति रसादिरूपोऽसंलक्ष्यक्रमो(म)व्यङ्ग्योऽर्थो ध्वनिव्यवहारप्रयोजकः। तथाच ध्वनिकृता "ध्वनिरङ्गा(रात्मा)ङ्गिभावेन भासमानो व्यवस्थितः" (ध्व. आ. २।३) इत्युक्तम्। (रु. सं. १४-१५)। ननु रसादिप्राधान्ये रसवदादयोऽलङ्कारा इति पूर्वाचार्याः-(का. अ. सा. सं. ४।४५) तत् कथमलक्ष्यक्रमो ध्वनिरित्यत आह **भिन्न** इति। अत्र हेतुमाह—**अलङ्कार्यतया स्थित** इति। तदेतद्विवृणोति वृत्तिकारः **प्रधानतये**ति। रसवदादीनां तर्हि को विषय इत्यत आह—**अन्यत्र त्विति** रसादेरेव वाच्यत्वे। यदाह ध्वनिकारः—प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः। काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मति (ध्व. आ. २।५) रिति। **गुणीभूतव्यङ्ग्याभिधाने** गुणीभूतव्यङ्ग्यप्रपञ्चनावसरे।

**कारणानी**त्यादि—स्थायी भावो रस इति वक्ष्यमाणेन सम्बन्धः। **स्मृत** इति ध्वनिकारसम्प्रदायसिद्धत्वं ब्रूते। कः पुनरयं स्थायी ? न हि चित्तवृत्तेराशुतरविनाशिन्याः स्थैर्यसम्भवः। हर्षादिष्वपि चातिप्रसङ्गः। वासनासन्दीपनश्च विषयातिशयात् पात्रप्रकृतिविशेषाच्च चित्तादिसाधारणमेवेति। सत्यं, चित्तवृत्तिकदम्बक आस्वाद्यमाने बुद्बुदवदुन्मज्जनिमज्जमाना[4]स्वप्यन्यासु चित्तवृत्तिषु स्रक्सूत्रन्यायेन (40a) यद्वासनाऽऽस्वादपदवीमवगाहमानाऽनुवर्तते स स्थायी, तथाच भावाध्यायपरिसमाप्तौ मुनिः—

---

4 एवमादर्शपुस्तके ; पुनः शानजत्र चिन्त्यः। यदि पुनरुन्मजन्निमज्जत्प्रायास्विति पाठस्तदा सर्वं स्वस्थम्।

बहूनां समवेतानां रूपं यस्य भवेद्बहु ।
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ॥
( ना. शा. ७।१२० नि. सा. ) इति ।

अत्र बहूनां चित्तवृत्तिरूपाणां भावानां मध्ये यस्य बहुलं रूपमुपलभ्यते स एव रसो रसीकरणयोग्यः, शेषास्तु सञ्चारिण इति वक्ष्यते (व्याचक्षते)। न तु रसानां स्थायि-सञ्चारिभावेनाङ्गाङ्गिता युक्ता। अतएवान्यो(न्ये) रसस्थायीति षष्ठ्या सप्तम्या द्वितीयया वा श्रितादिषु [ गमि ] गम्यादीना- (पा. २।१।२४ वाः ) मिति समासम् ( ध्व. आ. लो १७४-७५ पृः ) आम्नासिषुः। एवञ्च स्थायितया पठितस्यापि रसान्तरे यद्व्यभिचारित्वं दृश्यते यथा क्रोधस्य वीरे जुगुप्सायाः शान्तेर्व्यभिचारितया पठितस्यापि वा यत् स्थायित्वं यथा निर्वेदस्य शान्ते तत् सर्वमुपपद्यते। तथाहि—

तत्रालेख्ये कौतूहलतरलतन्वीविरचिते विधायैका चक्रं रचयति सुपर्णासुतमपि ( मधः )।
अथ स्विद्यत्पाणिस्त्वरितमपमृज्य तदपरा करे पौष्पं चापं मकरमुपरिष्टात्तु लिखति ॥
( स. स. कं. १७६ पृः )

अत्र विविधविकल्पगोचरचित्तवृत्तिभेदेऽपि रतिवासनाभिन्नाङ्कगेयधातुवदास्वाद्यते।

ननु— अग्घाइ चलणङ्गुट्ठ अ विलासपरिमद्दकुट्टिम घिट्ठद्धं ।
बहुसो सहीणिवेदिअसिढिलङ्गुलि गहि अ वीडिसंठाणं ॥[5] ( शृ. प्र. )

---

5 आजिघ्रति चरणाङ्गुष्ठविलासपरिमर्दकुट्टिमघृष्टार्धम्। बहुशः सखीनिवेदित-शिथिलाङ्गुलिगृहीतवीटिसंस्थानम् ॥ इति च्छाया। अत्र 'काव्यमाश्रयसम्पत्त्ये'ति प्राचीनालङ्कारिकनयेन भोजनिर्णीतस्याभिमानापरपर्यायस्य शृङ्गारतत्त्वस्य यल्लघूकरणं न सा सूक्ष्मेक्षिका। "सर्वात्मसम्पदुदयातिशयैकहेतुर्जागर्ति यो हृदि मानमयो विकारः" "रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते। योऽर्थस्तस्यान्वयात् काव्यं कमनीयत्वमश्नुते ॥" इत्यादिना च यो राद्धान्तः स तु रसतत्त्वस्य कूटस्थप्रतिष्ठा। तत्रारूढानां पक्षे "वीराद्भुतादिषु च येह रसप्रसिद्धिः सिद्धा कुतोऽपि वटयक्षवदवे भाती"ति नोन्मत्तप्रलपितम्। परं भागदृशा विश्लेषणमुखेनैषां भरतमुनि-प्रवर्तितानामुपयोगः। स च काव्यसौधारोहणे परमोपयोगिसोपानमिवाश्रयनीयः। तस्य च निर्देशः शृङ्गारप्रकाशाख्यमहाग्रंथे रसावियोगप्रकाशे। व्यभिचारि-साधारण्ये रसव्यवहारसम्भावनापक्षो भोजेनानुमोदितो रुद्रटेन सूचितश्च (का. अ. १२।४)। लोचने च रस्यमानतायां स्थायिव्यभिचारिणोर्न कोऽपि मौलिको विरोध इति प्राक्तनमतमुल्लिखितम् ( ध. आ. लो. १७४-७५ पृः )।

उक्तं हि भरतेन "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति"रिति। एतद्विवृण्वते। विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः रत्यादिको भावो जनितः, अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः, व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपताऽनुसन्धानान्नर्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लटप्रभृतयः।

---

इत्यादौ चिन्ताऽऽदयोऽपि तथा प्रकाश्यन्ते। (40b) तद्वरमभिमानापरनामा भवत्वेक एव शृङ्गारात्मको रसः, तदुपाधिकश्चायमनियमेन व्यभिचारिसाधारण एव रसव्यवहारः प्रती(ता)यतामिति। नैतत्, भावावबोधात्। न हि काव्यप्रतिसन्धानापेक्षया स्थायिनिरुक्तिरपि[तु] पात्रप्रकृत्यपेक्षया। तथाच निबद्धं महाकविना—

अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं प्रेम सुमानुषस्य कथमप्येकं हि तत् प्राप्यते॥

(उ. रा. च. १।३९) इति

अतएव पात्रप्रकृत्यपेक्षया नी-(सी)ताऽऽद्युपलक्षितोऽनुरागः शब्दार्थगतत्वेन तु सहकाराद्युपलक्षितः पाकः प्राचीनैरुपदर्शितः[6]। तिर्यगादिषु च बाधोदयं यावदाभासमानो रत्याद्याभास इत्युच्यत इति तदेतदास्तां तावत्। यदि स्थायी रसः पात्रे तर्हि प्रसक्त इत्यत उक्तं **भाव** इति। 'भावना वासना व्याप्तिरित्यनर्थान्तरम्। तथाह्युच्यते—अनेन गन्धेन रसेन वा सर्वं भावितं वासित'मिति (ना. शा. ७ अः)। वाक्यार्थतत्त्वपरिशीलनविशदीकृते सामाजिकमनोमुकुरे वर्णनीयतन्मयीभवनयुक्तया भविष्यद्रसास्वादोऽङ्कुरीभवन् स्ववासनाप्रतिफलनयोग्यतामापाद्यमानः स्थायी भाव उच्यते। तदुक्तं भावयतीति भावः,

---

6 प्राचीनानां नवधा पाककल्पनं काव्यमीमांसायामित्थं दर्शितम्। 'तत्रकः पुनरयं पाकः? परिणाम इति मङ्गलः। कः पुनरयं परिणाम इत्याचार्याः। 'सुपां तिङाञ्च श्रवः। सैषा व्युत्पत्ति'रिति मङ्गलः। एषैव सौशब्दयाख्ययोल्लिखिता षष्ठ उद्धरिष्यते। सहकारपाकस्योद्देशो 'गुणस्फुटत्वसाफल्ये काव्यपाकं प्रचक्षते। चूतस्य परिणामेन स चायमुपमीयते॥' (का. अ. सु. वृ. ३।२।१४) इति, "आदौ मध्यसमस्ते स्वादुसहकारपाक"-(का. मी. २०।११ पृः)मिति च।

भू इति करणार्थो धातुरवगन्तव्य (41a) इत्यादि[7]। कथमेवमित्यत आह **तैर्व्यक्तः**— यदि तैरित्येतदेवोच्येत [तदा] प्रधानभूतकारणादिधर्मिपरामर्शेऽसङ्गतिः स्यात्। अतो **विभावाद्यै**रित्युक्तम्। के पुनरमी विभावादय इत्यत आह **कारणानीत्या**दि। सवासना चित्तवृत्तिरुत्पत्तिधर्मिणी कारणमन्तरेण कथमात्मानमासादयेत्, तच्च [ततश्च] स्वरूपहेतु-रालम्बनभावमापद्यमान आलम्बनमित्युच्यते यथा जानकीरामभद्रौ। मिथश्चित्तवृत्तिं प्रति वासनाविशेषकारणञ्च तामुद्दीपयदुद्दीपनमित्युच्यते। अनयोरन्तरवस्थाऽपि यथाक्रममालम्बन-मुद्दीपनमिति वा-(चा)भिधीयते। परचित्तवृत्तिश्च नाध्यक्षा कथं लिङ्गादृते प्रतीयत इति कार्यभूता नयनत्रिभागावलोकनादयो लिङ्गभूयमापद्य तां गमयन्ति। न च प्रतिबन्धावधारणेऽनवस्था स्यादिति वाच्यं, स्वात्मनि प्रत्यक्षेण कार्यकारणभावावधारणसम्भवात्। कथमेकैव चित्तवृत्तिस्तत्र विचित्रस्मितरुदितादिकरी स्यादित्यत आह—**तानि चेदि**ति। चेच्छब्दस्य च 'तत् कथ्यन्त' इति तच्छब्देन योजना। **तदिति** तदेत्यर्थः। **नाट्य-काव्ययोरि**ति विषयसप्तम्या अ[ना]न्यत्वेति भावः। न च कारणादयो विभावादयश्चेत्येकं तत्वम्, इतरथा हि मुनिः कारणकार्यसहकारिसंयोगाद्रसनिष्पत्तिरित्येव ब्रूयात्। अतएव

---

7 अत्र मुद्रितनाट्यशास्त्रपुस्तकपाठो नानेन संवादी। टीकाकृता स्वकीयस्मृतिबलाद्-ग्रन्थोद्धारः कृतः स्यात्, मुद्रितपाठो वा मातृकादोषतो विपरीतः स्यात्। एवमभिनव-गुप्तग्रन्थयोरत्र टीकाकृदुद्धृतयोः क्वचित् क्वचिन्नान्तरिकः संवादः। 'भू इति करणार्थं' इत्येतत्स्थले मुद्रितमुनिग्रन्थे पाठः 'भू इतीतकार ( भू इतीतिकार ) उच्चारणार्थः। णिचा संबन्धेनेति इति इकारप्रत्यये सति भूधातुः करोत्यर्थे वर्तत' इति(अभिनवभारत्याम्)। भोजमते द्विविधो धात्वर्थोऽस्त्यर्थो भवत्यर्थः करोत्यर्थश्च। तत्र निर्वचनीयभावपदे करोत्यर्थस्यैव ग्रहणमिति सम्प्रदायविदः। न च तावन्मुनि-कृतात् सूत्रात्तद्वृत्तौ दृष्टान्ताच्च लोल्लटादीनामुत्पत्तिवादिनां पक्षः समर्थितः स्यादिति मन्तव्यमिति 'व्यक्तः स तै'रिति मम्मटकारिकायां निर्देशः। तैरिति सहार्थेनाप्रधाने तृतीया यथैव व्याख्यातमग्रेऽभिनवकृतरससूत्रव्याख्याने 'तेषां स्थायिना सह पानकरसन्यायेन विभावादिप्रतीतिसाहित्येनेत्यादिना। वैयाकरणन्याय इवात्रापि प्राधान्यमभिव्यक्तिक्रिययोपाहितं यदाह टीकाकृत् 'प्रधानभूतकारणादिधर्मिपरामर्श' इत्यनेन। न पुनरेते पृथगनुभूतस्थितयः परन्तु समूहालम्बनरूपाः। अतएव पानकरसन्यायेनेति दृष्टान्तस्थापनमापाततोऽर्थविप्रतिपत्तिकरस्य मुनिविवरणीय-षाडवादिरसपदस्य स्थाने।' तेनैव चालौकिकत्वं रसपदार्थस्येत्यपि द्योतना।

च रसभावादीना-(41b)मनुमेयत्वं न सम्भावनीयं विभावादीनां भिन्नलक्षणत्वात्। तथाहि ये लोके रामादिगतचित्तवृत्तिविशेषहेतवः सीताऽऽद्याः केचित्त एवाभिनयविशेषैरुपदृश्यमानाः सन्दर्भविशेषैर्वा समर्थ्यमानाः सन्तो विभाव्यन्ते भावा एभिरिति कृत्वा **विभावा** इत्युच्यन्ते। तदिह विभावो विज्ञानार्थः। विभावितं विज्ञातमित्यनर्थान्तरं, यदाहाचार्यः-( ना. शा. ११४ ) बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः। अनेन यस्मात्तेनायं विभाव इति संज्ञित इति। ये च तेषां कार्यभूताः कटाक्षादयोऽर्थास्त एव काव्यादावुपदृश्यमानाः सन्तोऽनुभावयन्ति तांस्तान् भावानिति कृत्वा**ऽनुभावा** इत्युच्यन्ते। यदाह (ना. शा. ७१५ वृः)—'यदयमनुभावयति वागङ्गसत्त्वकृतानभिनयांस्तस्मादनुभाव इति'। तच्चित्तवृत्ति(त्ते)स्तन्मयीभवनमेव ह्यनुभवनम्। ये च तेषामन्तराऽन्तराऽनवस्थायिनोऽवस्थाविशेषास्तदवान्तरहेतुजनिता उत्पद्यन्ते त एव स्वैः स्वैर्विभावादिभिरभिव्यज्यमानाः सन्तो विशेषादाभिमुख्येन चरन्ति वर्तन्ते तेषु तेषु भावेष्विति **व्यभिचारिण** इत्युच्यन्ते। यदाह—'विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः। स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥' (द. रू. ४-७) अतएव प्राधान्यान्नानाभावोपगतास्वपि स्थायिन एव भावा रसत्वमाप्नुवन्ति। यदाह ( ना. शा. ७१८ )—'यथा नराणां नृपतिः शिष्याणाञ्च यथा गुरुः। (42a)एवं हि सर्वभावानां भावः स्थायी महानिह॥ स्थायिनामेव भावानामुपकाराय सर्वदा। वर्तन्ते सात्त्विका भावा भावाश्च व्यभिचारिणः॥' इति॥ तदित्थमेभिर्विभावादिभिरभिव्यक्तः स्थायी भावत्व-( रसत्व ) मापद्यमानो रसीभवतीति। तदुक्तम्—'योऽर्थो हृदयसंवादी तस्य भावो रसावहः (रसोद्भवः)। शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना॥' ( नाः शाः ७१७ ) इति। एतच्च तत्रभवता भरतमुनिना सूत्रितम्—**विभावेत्या**दि। तत्र भट्टलोल्लटादीनां मते कार्यकारणभावेन [ज्ञाप्यज्ञापकभावेन] पोष्यपोषकभावेन यथाक्रमं विभावादिभिस्त्रिप्रकारः सम्बन्धः संयोगः। अतएव निष्पत्तिरपि त्रिधैवात्र पक्षे व्याख्येया। ततश्चानुकार्ये सम्भवन् स्थायिभावः पुष्टतया स्थितो मुख्यतया रसः। अपरिपुष्टस्तु स्थायी। नर्तके तूपचारेण रसस्थितिरिति।

**श्रीशङ्कुकमते** तु कारणकार्यसहकारिणो लोके गमकत्वेन प्रसिद्धा नाट्ये कृत्रिमत्वेन चमत्कारहेतुत्वादलौकिकविभावादिव्यपदेशभाजः सूत्रे निर्दिष्टाः। तैरवस्तुतो( तैर्वस्तुतो )-ऽसम्भाविनोऽपि स्थायिनो गम्यगमकभावलक्षणः सम्बन्धः संयोगः। ततो रसस्य निष्पत्तिः प्रत्येयतयैव स्थितिः। सा चानुकर्तृविषया सामाजिकसम्बन्धिनी च। उभयतो दत्तपादा हि रससंवित्। तत्रानुकर्ता रामत्वेन प्रतीतो रामसंविद्विषयः। रामदेवेन ( त्वेन ) च

राम एवायम्, अयमेव राम इति, न रामोऽयम् इत्यौत्तरकालिके बाधे रामोऽयमिति, रामः स्याद्वा न वाऽयमिति रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणतया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे

'सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिकादृशोः।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥२५॥ (शङ्कुक[8] ?)
दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥२६॥ (रु. का. अं. ७।२६)

इत्यादि काव्यानुसन्धानबलाच्छिक्षाऽभ्यासनिर्वर्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः 'संयोगाद् गम्यगमकभावरूपादनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः।

न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते, नोत्पद्यते, नाभिव्यज्यते, अपि

---

प्रतीतिः क्वचि-(42b)त् सम्यक्, साऽपि द्विधा। राम एवायमित्यन्यरूपत्वव्यावृत्त्यामेका, अयमेव राम इत्यप्रत्यक्षत्वव्यावृत्त्यां द्वितीया। द्विधाऽपि सा नेह स्थिता, अवधारणगर्भत्वेन[त्वेन] प्रतीतेः। क्वचित् पुनर्मिथ्या यत्र रामोऽयमिति प्रतीतावौत्त[र] कालिको न रामोऽयमिति बाधकप्रत्ययोद्भवः। साऽपि प्रकृते न स्थिता, बाधकप्रत्ययासंवेदनात्। क्वचित्तु दोलायमानोभयकोटिसंस्पर्शेन संशयप्रतिपत्तिस्वभावा। संशयोऽपि द्विविधो रामोऽन्यो वेति विशेषसंशय एकः, रामः स्यान्नवेति सत्ताऽऽश्रितः संशयो द्वितीयः। तत्राद्योऽतिस्थूलत्वेनासम्भाव्यत्वान्न शङ्कितः, द्वितीयस्तु सम्भाव्यत इति—अतएव स्वभावैराशङ्क्यनिराकृता (सम्भावितोऽप्यसंवेद्यत्वान्निराकृतः)। क्वचित्तु सादृश्यप्रतीतिर्यथा रामसदृशोऽयमिति। सा सदृशवस्तुद्वयप्रतीतिपूर्विका भवन्तो तदभावादिह नास्ति। एवं सम्यङ्मिथ्यासंशयसादृश्यप्रतीत्यभावेऽपि रामोऽयमित्यवच्छेदपरिहारेण प्रतीतिचतुष्टया[भावेऽपि] चित्रतुरगे तुरगोऽयमितिवद्व्यवस्थिता प्रतीतिर[न] पल्लवनीयत्वाल्लोकोत्तरतामेव प्रकाशयति। अतश्च सामान्य-

---

8 अभिनवभारतीसंग्रहेऽनुपलभ्यमानोऽप्ययं सर्वः श्रीशङ्कुकग्रन्थ एव, हेमचन्द्रकृते काव्यानुशासनविवेकेऽस्यावस्थानादित्युनुमीयते।

**तु काव्ये नाटेय चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्ति-सतत्त्वेन भोगेन भुज्यते इति भट्टनायकः।**

---

रूपतया रामत्वेन प्रतिपन्नेऽनुकर्तरि प्रतीतेर्विभावादिव्यपदेश्यैः कारणादिभिः कृत्रिमैरपि कृत्रिमत्वेनाप्रतीतैरविद्यमानोऽपि सामाजिकैरुपायबलाद्विद्यमानत्वेन सम्भाव्यमानः स्थायी चर्व्यते। स चानुमीयमानः (43a) स्थायी सिद्धरूपव्यङ्ग्यादिवैलक्षण्येन साध्यतयाऽनुमीयते, अतएव रसस्य रसनीयत्वासम्भावनैकप्रमाणत्वात्तथा व्यपदेश इति।

**भट्टनायक**दर्शने तु रसस्योत्पत्तिप्रतीत्यभिव्यक्तिपक्षान् दूषयित्वा भोगपक्षः प्रतिष्ठा-पितः। तत्रोत्पत्तिवादिना लोल्लटेन विभावैरेवोत्पत्तिरङ्गीकृता, अनुभावव्यभिचारिणोः प्रत्यायकत्वेन पोषकत्वेन चाभ्युपपन्नत्वात्। प्रतीतिस्त्वनुमानरूपा श्रीशङ्कुकेनाङ्गीकृता। अभिव्यक्तिः पुनर्विद्यमानस्यैव स्थायिनो ध्वनिवादिभि[र]भ्युपगता। तत्र त्रयाणामपि पक्षाणां साधारणमिदं दूषणम्। स्वगतत्वेन तथाभावे न रसस्य रसनीयत्वम्, परगतत्वेन ताटस्थ्याद्रसनीयत्वाभाव एव। अभिव्यक्तिपक्षे विषयार्जनतारतम्यादपि रसनीयत्वा-भावः। तस्मात् पक्षत्रयं त्यक्त्वा भोगपक्षोऽङ्गीकार्यः। भोगश्च चर्वणात्मा निर्वृतिपर्यवसायी जननादिविलक्षणः, तेषां देशकालाकारनियमेन प्रवृत्तेरुक्तदूषणा(दोषनि-) करानति-क्रान्तत्वात्; अस्य च तद्विलक्षणत्वेनालौकिकत्वादुक्तदोषातिक्रमात्। तथाहि काव्यात्मनः शब्दस्य त्र्यंशो व्यापारः—अभिधा-भावकत्व-भोगकृत्त्वाख्यः। तत्रापि (तत्राऽभिधा) निरन्तर-सान्तरार्थनिष्ठत्वेन मुख्यामुख्यभेदेन द्विविधः शब्दव्यापारः। स शास्त्रेतिहासयोरपि यथाक्रमं शब्दार्थप्राधान्येन प्रभुमित्रसम्मितयोः साधारणः। अ[न्य]दंशद्वयन्तु काव्य-नाट्ययोरेव, उभयत्रापि व्यापारप्राधान्याज्जायासम्मितत्वेन व्यवस्थितेः। तत्र भावकत्वं सीताप्रभृतिविभावादीनां, यत्राप्यसम्भवस्तत्रापि भवद्भावं (?) साधारण्यापादनार्थम्। तच्च काव्ये गुणालङ्कारयोगदोषपरिहाराच्च[9] सम्भवति, नाटये चतुःप्रकाराभिनययोगात् सामग्री-वैचित्र्याद्धि शदार्थानां वैचित्र्यलाभः। तद्यथा रजनिकरमयूखसन्निकर्षेण चन्द्रकान्तोपलस्य द्रवत्वोत्पादः, एवं काव्यनाट्ययोः सामग्रीवैशिष्टयेन साधारणीकरणं नाम भावकत्वं व्यापारः।

---

9 बन्धनीगर्भोऽयं नातिस्वल्पः सन्दर्भो लिपिकरप्रमादवशाद् गलितष्टीकाकृदुपजी-व्याद्दृचककृतसङ्केतात् परिपूरितः। गलितत्वे युक्तिरसंलग्नत्वं व्याख्यानस्य विकलप्रायत्वञ्च।

लोके प्रमदाऽऽदिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनाऽऽदिव्यापारवत्त्वादलौकिकविभावादि-शब्दव्यवहार्यैर्ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनाऽऽत्मतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि [10]साधाराण्योपाय-वलात् तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसंपर्कशून्या-परिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः, पान-करसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवा-लिङ्गन्नन्यत् सर्वमिव तिरोदधद् ब्रह्मास्वादमिवानुभावयन्नलौकिकचमत्कार-कारी शृङ्गारादिको रसः। स च न कार्यः, विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात्। नापि ज्ञाप्यः, सिद्धस्य तस्यासम्भवात्। अपि तु

---

साधारणीकृतेषु च विभावादिषु साधारण्येनैव विषयीकृतस्य स्थायिनः सहृदय(ये)विषय-चर्वणकारित्वं नाम भोगकृत्त्वं पार्यवसानिकं व्यापारः। (43b) तत एव सहृदय-रञ्जनाज्जायासम्मितत्वम्। भोगश्च परानन्दास्वादात्मा योगिगतो ब्रह्मास्वादसन्निकृष्ट इत्यास्ता-मेतत्।

ध्वनिदर्शनानुसारेणाचार्य**श्रीमदभिनवगुप्तस्य** मते व्यङ्ग्यो रसः, विभावादयो व्यञ्जकाः, व्यङ्ग्यव्यञ्जकभावलक्षणश्च सम्बन्धस्तेषां स्थायिना मिह(सह)। स्थाय्येव योग्यतयाऽत्र रसीभवतीत्युच्यते। स च सम्बन्धः सूत्रे संयोगशब्देनोक्तः। ततो रसस्य निष्पत्तिरभिव्यक्ति-रित्यर्थः। स च रसः सामाजिकानां, नानुकार्ये, नानुकर्तरि, सामाजिकानां निश्चमत्कारत्व-प्रसङ्गात्। तेषामेव चास्ति लोकोत्तरश्चमत्कारो नानुकार्यस्य, लौकिकपरिमितसान्तराय-चित्तवृत्त्याक्रान्तत्वात्। नानुकर्तुस्तस्य तथाविधचित्तवृत्तिशून्यस्य निष्प्रयोजनत्वाच्चमत्कार-पारिमित्यापाताच्च। तत्र कारणादीनामेव लोकोत्तरसाधारणीकरणव्यापारवत्त्वाल्लोकोत्तर-विभावादिव्यपदेशः। तत्साधारण्ये च स्थायिरूपस्य प्रमेयस्य साधारण्यात् प्रमातुरपि साधारण्यम्। अतश्च न विभावादि(ष)साधारण्यहेतुकसमुद्रोल्लङ्घनकृतादिदोषापत्तिः,

---

10 एष श्रीधरधृत पाठः। साधारणोपायबलादिति तु प्रायिकः पाठः।

विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत्, न क्वचिद् दृष्टमित्यलौकिकसिद्धेर्भूषणमेतन्न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिकप्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽप्यभिधीयताम्। तद्ग्राहकं च न निर्विकल्पकं, विभावादिपरामर्शप्रधानत्वात्। नापि सविकल्पकं, चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्। उभयाभावरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः॥

---

प्रमातुः पारिमित्याभावात्। यस्य समुद्रोल्लङ्घनादि सम्भवति, तदभेदेन स्वात्मनः प्रतीतेः प्रमेयसाधारण्येन। प्रमातृसाधारण्ये त्वयं दोष एव। तच्च(44a)नाङ्गीक्रियत इति निस्तुषं व्यञ्जनदर्शनम्। तथाहि निर्वासनस्य रसचर्वणा नास्ति। श्रोत्रियजरन्मीमांसकादयो हि नाट्यमण्डपान्तःप्रविष्टा अपि चमत्काराभावात् कीलकप्राया एव। प्रशान्तब्रह्मचारिप्रभृतयश्च शृङ्गाररसास्वादे बहिरङ्गाः। गाढरागाणाञ्च शान्तरसचर्वणाऽनभिज्ञत्वम्। अननुभूतशोकस्पर्शानाञ्च करुणास्वादावसरे पाषाणप्रख्यत्वम्। तदेवं वासनाऽवभास एव रसचर्वयितृत्वम्। सा चानादिकालीना वासना स्थायिभूतैव विभावादिवशाद्रसत्वमापद्यते, न च व्यभिचारिभूता, तान्त्रिकत्वाद्रसशब्दस्य। विभावादिभिर्व्यञ्जनादेव[च] स्थायिनो रसत्वम्। व्यङ्ग्यव्यञ्जकभावो हि तेषां सम्बन्धः। तथाहि द्विविधमिह संक्षेपेण व्यञ्जनम्—एकं तावत् कारणे सूक्ष्मतयाऽवस्थितस्य स्थूलरूपत्वं यथा क्षीरावस्थायाः शुक्लावस्थस्योत्तरं दधिरूपत्वम्। एतच्च प्रतीत्यनपेक्षमपि केवलवस्तुसमवेतमेव व्यञ्जनम्। द्वितीयन्तूपायप्रतीतिसापेक्षोपेयप्रतीतिरूपं यथा प्रदीपघटादौ। प्रदीपप्रतीतिसाहित्येनैव घटप्रतीतेः, प्रदीपस्य व्यञ्जकत्वात्। तदुक्तम्—स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः। यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारणा(का)त्॥[11] (प्र. वा. का: २६५) तदेवं रसस्य विभावादीनाञ्च द्वितीयो व्यङ्ग्यव्यञ्जकभावप्रकार आश्रीयते, पानकरसादिन्यायेन विभावादिप्रतीतिसाहित्येन रसप्रतीतेः। अतएव ध्वनिकृता रसाद्याश्रयेणा-

---

११ अयमेवाऽऽलङ्कारिकसम्मतः पाठः। मुद्रितपुस्तके ( ४६३ पृः ) यथा दीपोऽन्यथा वाऽपीति पाठो दृश्यते।

संलक्ष्यक्रमव्यङ्ग्यत्वमुक्तम् (२।२)ः प्रदीपघटदृष्टान्तश्च (44b) व्यञ्जने ( ३।१३, १६५ पृः ) प्रदर्शितः। संलक्ष्यक्रमव्यङ्ग्यादौ कथं व्यञ्जकत्वमिति चेत्; तत्रापि व्यञ्जकप्रतीतिपुरःसरत्वेन व्यङ्ग्यप्रतीतेः क्रमवत्त्वेऽपि व्यङ्ग्यप्रतीतिकाले तावद्व्यञ्जकप्रतीतेरस्ति सहभाव इति प्रदीपघटन्यायेन स्थित एव व्यङ्ग्यव्यञ्जकभावः। तत्र हि पूर्वं केवलं व्यञ्जकप्रतीतिः, पश्चात्तु व्यञ्जकसहितव्यङ्ग्यप्रतीतिरितीयानेव पूर्वकल्पाद्विशेषः। वस्तुतस्तु क्रम उभयत्राप्यस्ति केवलं पूर्वत्रोत्पलदलशतव्यतिभेदन्यायेन [न] संलक्ष्यते, उत्तरत्र तु संलक्ष्यत एव। संलक्षणेऽपि व्यङ्ग्यप्रतीतिकाले तावद्व्यङ्ग्यव्यञ्जकप्रतीतिरस्तीत्येतावता प्रदीपघटदृष्टान्तोऽत्रापि न संगच्छते। तदुक्तं ध्वनिकृतैव, "न हि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवती"ति (१६० पृः)। एवमेव चैतद् व्यङ्ग्यप्रतीतौ हि व्यञ्जकप्रतीतिरुपयुक्ता; न व्यञ्जकप्रतीतौ व्यङ्ग्यप्रतीतिः, घटप्रदीपवदेव प्रदीपप्रतीतेः केवलाया अपि भावात्; तदेतत् प्रसक्तानुप्रसक्तमास्ताम्। प्रकृते तु विभावादिभिर्व्यज्यते रस इति सुव्यवस्थितमेव। एवञ्च व्यवस्थिते रसस्य कार्यत्वं ज्ञाप्यत्वं भोग्यत्वञ्च पराकृतं भवति। तथाहि—कार्यस्तावद्रसो न भवति, कारणाभावेऽपि भावप्रसङ्गाद्, घटवत्। यत्कालं मर्दनं तत्कालं मर्दनसुखमिति न्यायेन कार्यकालेऽपि कारणस्य भाव इति चेन्, नैतत्; मर्दनस्य स्पर्शरूपत्वात्, स्पर्शसंवेदनसमयेऽन्तःस्प्रष्टव्यस्यापि संवेदनात्। अन्तःस्प्रष्टव्यविशेषस्वभावत्वाच्च सुखस्य, बहिः सुखं नान्यत् किञ्चिद्दृश्यते अन्तःस्प्रष्टव्यविशेषात्। ततो मर्दनं स्पर्शः, तत्सहभावी चान्तःस्प्रष्टव्यविशेषः, तदेव च सुखमिति (45a) नास्ति पौर्वापर्यम्। इह तु कार्यत्वादेवौत्तरकालिकत्वं रसस्येति विभावैः सहभावो न स्यात्। अस्ति च, तस्मान्न कार्यो रसः। किञ्च कार्यं न नियमेन कारणज्ञानमपेक्षते, इह तु नियमेन विभावादिज्ञानापेक्षेति कार्यत्वं तावन्निरस्तम्। प्रत्येयत्वं तर्हि स्यात्? नैतत्; सिद्धस्य तद्भवतीति। न रसः पूर्वसिद्धः प्रतीत्यारूढस्यैव रसत्वात्। अतश्च न रसः प्रतीयते, अपि तु 'प्रतीयमान एव रसः। प्रतीयते रस इत्योदनं पचतीतिवद्व्यवहारः'। ( ध्व. आ. लो. २१४ आदि ६६ पृः ) अतएव सिद्धत्वाभावात् सा रसस्य प्रतीतिश्चर्वणास्वादनादिशब्दवाच्या। चर्वणा चात्राभिव्यञ्जनमेव। नतु ज्ञापनं प्रमाणं(ण)व्यापारवत्; नाप्युपादानं हेतुव्यापारवत्। अतो न विभावादीनामत्र ज्ञापकत्वं, न च कारकत्वमपि तु चर्वणोपयोगितेत्याह। **अपित्विति**—एवं तर्हि चर्वणीयत्वाद्भोग्यत्वं स्यात्। एतदपि नास्ति, भोग्यत्वं हि भोगविषयत्वम्, भोगश्च किं वस्तुवृत्तमेव किञ्चित् उत स्वित् प्रतिपत्तृवृत्तम्? न तावद्वस्तुवृत्तम्, प्रतीत्यनपेक्षस्य नीलादिन्यायेन वस्तुस्वभावतयैव तस्याभावात्। प्रतिपत्तृवृत्तं चेत् प्रतिपत्तुरपि किमिच्छाद्वेषादिन्यायेन कश्चिदतिशयो भोग आहोस्वित् प्रतीत्यात्मा? न तावदिच्छाऽऽदिन्यायेन, तेषामप्रतीत्यात्मत्त्वे जडताऽऽपत्त्या

प्राप्नोति।' (ध्व. आ. लोः १५२ पृः) 'महाभारते हि शान्तस्यैवाङ्गित्वमितरेषां रसानामङ्गत्वमेव, यथा रामायणे करुणस्य प्राधान्यमन्येषान्तु गुणत्वम्' ( ध्व. आ. ४।५ वृः ) **अन्ये त्विति**—तद्यथा मालतीमाधवे पञ्चमेऽङ्केऽन्योन्यदर्शनानन्तर' मालतीमाधवयोरुक्तिप्रत्युक्तिचेष्टाप्रबन्धो मालत्याः पित्रोरसम्मत्या स्वदानस्यावश्यकरणीयतामभिव्यनक्ति। यथा तत्रैव तृतीयेऽङ्के लवङ्गिकां प्रति कामन्दक्या उक्ता 'अयि सरले किमत्र भगवत्या शक्यम्? प्रभवति प्रायः कुमारीणां जनयिता दैवञ्च। यच्च किल कौशिकी शकुन्तला दुष्यन्तमप्सराः पुरूरवसं चकम इत्याख्यानविद आचक्षते वासवदत्ता च सृञ्जयाय पित्रा दत्तमप्यात्मानमुदयनाय प्रायच्छदित्यादि तदपि साहसाभासमित्यनुपदेष्टव्यकल्पमित्यनाशास्यम्' इति। (75b) अत्राप्यनुपदेश्यताव्याजेनोपदेश्यत्वमेव 'कल्प'पदेन[40] द्योत्यते। न चोपमा प्रतीयते। यथा च **मधुमथनविजया**ख्यायां खण्डकथायां सन्दानितकविशेषकादिषु। तत्र सन्दानितके यथा जाणंती सा विअ्रडमङ्गिवेभ(?) सिंदूरमल्लिआ होंति। वलपीडिअकुमुद्दंतरुहिरभरिअव्वसअम्बरहरं ॥ किं अण्णं ताण विदाणाराण(?) णिच्चलबालवलआसु। बद्धंफलव्व दीसइ जस्स जसो समरसीमासु ॥ अत्र 'बद्धफलव्व' इत्युत्प्रेक्षया रुक्मिणीहरण-( पाणि ? ) लाभे निष्प्रतिबन्धता भगवतो द्योत्यते।[41] एवं विशेषक-कलापक-कुलकादिष्वपि द्रष्टव्यम्। रघुकारकृतौ रघुराघवयोर्वर्णने ( ८।१६ ) 'समयुज्यत भूपतिर्युवा सचिवैर्नीतिविशारदैरजः। अनपायिपदोपलब्धये रघुराप्तैः समितो विनेतृभिः' ॥ [इत्यादिना] 'इति शत्रुषु चेन्द्रियेषु च प्रतिबद्धप्रसरेषु जाग्रतौ। प्रमितावुदयापवर्गयोरुभयीं सिद्धिमुभाववापतुः ॥' (८।२३) इत्यन्तेन तुल्ययोगितया काव्यलिङ्गेन वा व्यतिरिक्तः (रेकः ?) प्रकाश्यते। एवञ्च नाटकादिषु विष्कम्भ[क]-प्रस्तावनादिषूक्तिप्रत्युक्तिप्रबन्धेषून्नेयमिति। तदित्थमर्थशक्तिमूलध्वनेरितरप्रकारोदाहरणानि शिक्षितलक्षणानां लक्ष्योदीक्षणे नानाप्रबन्धेषु स्वयमेवाविर्भविष्यन्तीत्यतो ग्रन्थकृता न प्रपञ्चितानि।

---

40 'कल्प'पदेनेति शिथिलमभिधानं कल्प(प्) प्रत्ययेनेत्यर्थः। अत्र विपरीतलक्षणागर्भव्यञ्जनया विवक्षितार्थप्रतीतिः।

41 मधुमथनविजयपरिकथा ध्वन्यालोके तदुपरि लोचने च परामृष्टा ( पृः १४२ ) हेमचन्द्रेण च काव्यानुशासने तद्विवेके चानूदिता। 'द्वाभ्यां क्रियासमाप्तौ सन्दानितकम्। बहूनां छन्दसामेकवाक्यत्वे तद्वाक्यानाञ्च समूहावस्थाने परिकथे'ति रुद्रटव्याख्याने नमिसाधुः। श्रीधरोद्दिष्टमुदाहरणन्तु लोचनकृद्धेमचन्द्रोद्धृताभ्यामुदाहरणाभ्यां भिन्नम्। अत्र तु प्रथमपद्ये पूर्वार्धे द्वितीयपद्ये पूर्वपादे च पाठविपर्यासो जातः। स च लिपिकरानवधानताकृतः।

पदैकदेशरचनावर्णेष्वपि रसादयः ।

तत्र प्रकृत्या यथा—

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।

रुद्दस्स तइअणअणं पव्वईपरिचुम्बिअं जअइ ॥९७॥

( गा. स. ५।५३ ; व. ल. ६०७ )

अत्र 'जयती'ति न तु शोभत इत्यादि। समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापारेणास्य पिधानमिति तदेवोत्कृष्टम्। यथा वा—

प्रेयान् सोऽयमपाकृतः सशपथं पादानतः कान्तया

द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।

तावत् प्रत्युत पाणिसंपुटगलन्नीवीनिबन्धं धृता

धावित्वेव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥९८॥

( का. अ. सू. वृ. ३।२।१५ )

अत्र 'पदानी'ति, न तु द्वाराणीति ।

तिङ्सुपोर्यथा—पथि पथि शुकचञ्चूचारुराभाऽङ्कुराणां

दिशि दिशि पवमानो वीरुधां लासकश्च ।

---

( 76a ) वाचकत्वं ध्वनिव्यवहारे न प्रयोजकं व्यञ्जकत्वेन व्यवस्थापनादिति पदैकदेशभूतैरपि विशिष्टविभावादिवाच्यार्थसामर्थ्यप्रकाश्यानां रसादीनां प्रकाशनमित्याह **पदैकदेशेति**।[42] अयञ्च प्रकृतिप्रत्ययात्मकत्वेन द्विधा। तत्र धातुः प्रातिपदिकञ्चेति प्रकृतिरपि द्विधैव। तिङ्सुप्प्रभृतयश्च प्रत्ययभेदाः। तत्र तिङ्कृतं व्यञ्जकत्वं यथा **रइ** इत्यादि। रतिकेलिहृतनिवसनकरकिशलयरुद्धनयनयुगलस्य। रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति॥ अत्र शोभते राजत इत्यादिक्रियापदान्तरतिरस्कारेण जयतेरेव प्रयोगः पिधानान्तरातिशयादिना चुम्बनस्य लोकोत्तरप्रकर्षं शृङ्गारजीवितभूतं व्यनक्ति। प्रकृतेर्यथा **प्रेयानि**तीयसुना प्रियत्वमात्रनिरासपरेण काऽपि प्रेमपात्रता द्योत्यते। प्रत्ययस्य यथा—**पथि पथीत्यादि**। **पवमा**नो वातः, **लासको** नर्तकः। **किरती**ति कर्तरि

---

42 अत्र च सरस्वतीतीर्थकृतबालानुरञ्जन्यां प्रकृतिप्रत्ययसम्बन्धकालवचनपुरुषवाक्यगतपूर्वनिपातविशेषणविभक्तितद्धितोपसर्गनिपातसर्वनामप्रातिपदिकाव्ययीभावकर्मभूताधारादिविशेषा रचनेति सारसंग्रहः।

नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥९९॥

अत्र 'किरती'ति किरणस्य साध्यमानत्वं 'निवृत्ते'ति निवर्तनस्य सिद्धत्वं, तिङा सुपा च तत्रापि 'क्त' प्रत्ययेनातीतत्वं द्योत्यते। यथा वा—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितः
निराहाराः सख्यः सततमरुणोच्छूननयनाः।[43]
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥१००॥ ( अ. श. )

अत्र 'लिखन्नि'ति न तु लिखतीति, तथा 'आस्ते' इति न त्वासित इत्यपि तु प्रसादपर्यन्तमास्त इति, 'भूमि'मिति न तु भूमाविति न हि बुद्धिपूर्वकमपरं किञ्चिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम्। सम्बन्धस्य यथा—

गामारुहम्मि[44] गामे वसामि णअरट्ठिइं ण जाणामि।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥१०१॥
( गा. स. वे. ७०५ )

---

प्रत्यय इति (76b) साध्यमानत्वं न वाच्यं किन्तु द्योत्यम्। एवं प्रातिपदिकार्थमात्रविहितया प्रथमया तद्गतं सिद्धत्वं द्योत्यते। निष्ठाप्रत्ययस्य कर्त्रादिकं वाच्यमिति धात्वर्थगतमतीतत्वं व्यङ्ग्यम्। **लिखन्नि**त्यादि—**अरुण**' दग्धपद्म घोरवटिकाविकाश (निकाशम् ?) **उच्छूननयनाः** कठिन-कठोरहृदयतया निरस्तान्यानुरोधा इत्यर्थः।—**लिखन्नास्त** इति लिखनस्योपलक्षणीभावाद-वस्थिता (तया) क(कस्या)न्यपारतन्त्र्यं प्रतीयते। सुस्थावस्थे चेतसि बुद्धयः समुन्मिषन्तीति तन्मयीभावेन विगलितसकलकरणपाटवस्य सतताभ्यस्तविद्याऽननुस्मरणमनुरागोद्रेकसूचकम्। **गामरुहम्मी**त्यादि—ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि। नागरिकाणां पतीन् हरामि या भवामि सा भवामि॥ ग्रामरुहाऽत्यन्तग्रामजाता। या भवामि सा भवामीत्यभिजनादावनादरेण सौभाग्यगर्वाभिमानादिकम्। षष्ठ्याऽनादरो द्योत्यते, ता अनादृत्य हरामीत्यर्थः। हरणञ्च नादानमात्रं किन्त्वाह्लादप्रवणाकिङ्करतापरम्।

---

43 'रुदितोच्छूने'ति प्रायिकः पाठः।

44 'गामारि अम्मि' इति वेवरसम्पादिते गा. स. पुस्तके पाठान्तरम्। स च पाठः सरस्वतीतीर्थादिभिर्धृतो विवृतश्च।

अत्र 'णाअरिआणा'मिति षष्ठ्यः।

"रमणीयः क्षत्रियकुमार आसीत्" (१०२) (म. वी. च. २।३१ अः गद्य.) इति कालस्य। एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः। वचनस्य यथा—

ताणँ गुणग्गहणाणं ताणमुक्कंठाणं तस्स पेम्मस्स।
ताणँ भणिआणं सुंदर एरिसिअँ जाअमवसाणं ॥१०३॥

(गा. स. वे. ६४०)

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते। पुरुषव्यत्ययस्य यथा—

रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमा-
मेषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥१०४॥

अत्र प्रहासः। पूर्वनिपातस्य यथा—

येषां दोर्बलमेव दुर्बलतया ते सम्मतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः।
ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥१०५॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते। विभक्तिविशेषस्य यथा—

---

**रमणीय** इत्यादि—अत्र वर्तमान एव क्षत्रियकुमारः, आसीदित्यस्मिन् पदे लङ्प्रत्ययप्रकाशितो भूतकालस्तस्मिन्नमर्षं प्रकाशयति। **ताण**मित्यादि—तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः। तेषां भणितानां सुन्दर ईदृशमीर्षितं[45] वा ज्ञातं (जात)मवसानम्॥ (77a) बहुवचनेन गुणग्रहणादीनामनवधिकत्वं, प्रेम्ण इत्येकवचनेनोभयचित्तवृत्तेरेकीभावः। **रे रे चञ्चले**त्यादि। **अत्र प्रहास** इति—'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवचन'मिति (पा. १।४।१०६) मन्योपपदे

---

45 अत्यन्तिरीर्षेति कोषः। अन्याऽऽसक्ताय नायकाय स्वकीयगुणानुरागादीन् प्रत्यत्यान्तिनिदानेयं तत्कृताऽवज्ञाऽऽशंसेति भाग्यविपर्ययसूचिका खेदोक्तिर्नायिकायाः, अत ईर्षितमित्यनवद्यमेव।

प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥१०६॥

अत्र 'दिवसेने'त्यपवर्गतृतीया फलप्राप्तिं द्योतयति ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात् कामं नवमिव रतिर्मालती माधवं यत्
गाढोत्कण्ठाललितलुलितै[46]रङ्गकैस्ताम्यतीति । १०७॥

( मा. मा. १।१५ )

अत्रानुकम्पावृत्तेः 'क'रूपतद्धितस्य ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥१०८॥

( मा. मा. १।३० )

---

मध्यमः पुरुषो मन्यतेश्चोत्तमः । किं मन्यसे विहरिष्यामीत्यर्थः । **येषा**मित्यादि— अल्पाच्तरत्वा**न्नयस्**य पूर्वनिपाते प्राप्ते '**पराक्रम**'स्य पूर्वनिपातोऽभ्यर्हितताहेतुक इति तस्य प्राधान्यम् । **प्रधने**त्यादि—प्रधनं संग्रामः । फलप्राप्तौ सत्यां क्रियापरिसमाप्ति**रपवर्गः** । **भूयो भूय** इत्यादि—**सविधनगरीरथ्या** भूरिरसुमन्दिरासन्नमार्गः । **साक्षा**दित्यनङ्गरूप-परिहारेण, **नव**मिति पार्वतीसमाराधितपरमेश्वरप्रसादाद्दाहानन्तरमेव समुत्पन्नम् । गद्योप-क्रमत्वादस्य शोकस्य (श्लोकस्य) गद्यशेषस्थ [ स्थेन ] '**यदि**'ति पदं सम्बध्यते ; तेन **ललितैः** सुन्दरै**र्लुलितैः** साहजिकमवष्टम्भमपहाय म्लानकान्तिकैरेभिरङ्गकैरुपलक्षिता सत्यभिखिद्यत इति यत्नवङ्गिकयैव निवेदितमिति तत्र योजना । **अङ्गकै**रित्यनुकम्पावृत्तिना तद्धित'क'-प्रत्ययेनाभिलाषविप्रलम्भप्रभवमङ्गानां रामणीयकानुबन्धि किमपि शोच्यत्वं द्योत्यते । यद्यपि प्रागप्रयोगात् स्वतन्त्रप्रयोगाभावात् षष्ठ्या अश्रुतेर्लिङ्गसंख्याविरहाच्च वाचक-वैलक्षण्येन द्योतका निपाता ( 77b ) इति प्रादिनिपातानां द्योतकत्वं वैयाकरणादिमते व्यवस्थितमेव तथापीह व्यङ्ग्यरसापेक्षया तेषां व्यञ्जकत्वं दर्शयन्नुदाहरति **परिच्छेदातीत**

---

46 'लुलितलुलितै'रिति प्रायशः परिगृहीतः पाठः ।

अत्र 'प्र' शब्दस्योपसर्गस्य ।

कृतञ्च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान् न यावदायात्युदयाद्रिमौलिताम् ॥१०९॥

अत्र तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य ।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥११०॥

(रा. अ. ? )

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनाम-प्रातिपदिकवचनानां न त्वदिति, न मदित्ति अपि त्वस्मदित्यस्य सर्वाक्षेपिणः, भाग्यविपर्ययादित्यन्यथा-संपत्तिमुखेन न त्वभावमुखेनाभिधानस्य ।

---

इत्यादि—मनसेयत्तया परिच्छेत्तुमशक्यः । **सकले**त्यादिनाऽभिव्यक्तुमशक्यतोक्ता । तेन 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति (तै. उ. २वः।४,६) दर्शितमिति **मिश्राः** । एवं **पुनः**-शब्दोऽत्र ( शब्देनात्र ) द्वितीयवारमात्रं नत्वनागामिनि द्वितीयवारे। **गहनो** गम्भीरः। **जडयति** सुखयति तापयति च—यो हि जाड्यमापादयति स कथं तापयतीति विरोधोसस्तु ( धाभासस्तु ) सौन्दर्येणाप्राप्तिपर्यवसानेन परिह्रियत इति विरोधालङ्कारः । तदिह 'प्र' शब्देन प्रध्वंसादिक्रियाप्रसक्तत्वेन माधवस्य मनसि विवेकलेशस्यापि समूलमुच्छेदान्महामोहार्ण-वमग्नस्य कोऽप्याभिलाषिकः शृङ्गारो व्यज्यते ।

अथ निपातानां व्यञ्जकत्वं दर्शयति—**कृतञ्चे**त्यादि । कृतमित्यादिना पारतन्त्र्य-निरासात् स्वेच्छासंसारित्वं ( सञ्चारित्वं ), **किमन्यदि**ति लोकोक्त्या शत्रुनिराकरणे सामग्र्यन्तरनैरपेक्ष्यं बलवदापादकविरहश्च कथितः । अस्माकमित्यत्र **'न'** इति शत्रुशून्यस्यापि परदुःखदुःखितस्य भगवतो जगत्कण्टकोद्धारणप्रवृत्त्या कारुण्यमुचितविषयमिव प्रतीयते । **तमांसी**त्यादि निहतत्वादेः स्थानादिवैधर्म्येण प्रतिबिम्बनमिति ( 78a ) दृष्टान्तोऽलङ्कारः, तस्य साधर्म्यवैधर्म्याभ्यां द्विधा प्रतिपादनात् । तदिह **'कृतं'** **'निहता'** इति शब्दद्वय-निरन्तरस्थितिना **'च'** शब्देन तुल्यकालक्रियायोगात्तुल्ययोगिताद्योतकेन वीररसः प्रकृष्यते । एवञ्च यद्यपि द्वाभ्यां 'च' शब्दाभ्यामत्र तुल्ययोगिता द्योत्यते तथापि द्वितीयस्यान्वाचय-परत्वेनाप्युपपत्तेः प्रथमस्यात्र प्राधान्यमित्याह **'च' इति निपातस्ये**ति । यदि वा जातावेक-

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥१११॥

( व्य. वि: )

अत्र इमनिज-व्ययीभाव-कर्मभूताधाराणां स्वरूपस्य, तरुणत्वे इति, धनुषः समीपे इति, मौलौ वसतीति 'त्वा'दिभिस्तुल्य एषां वाचकत्वे[47] अस्ति कश्चित् स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति।

---

वचनं, द्वाभ्यामेव 'च' शब्दाभ्यां तत्प्रकाशनात्। 'च' शब्दस्तु सुबन्ततया पदं, तथापि निपातस्य विभक्तेरश्रुतेः पदावयवत्वं, यदि वा प्रकृतिप्रत्ययवत् केवलस्याप्रयोग इति।

**रामोऽसा**वित्यादि—**स्वरैः** षड्जादिभिः सप्तभिः। **असा**विति सर्वनाम्ना साक्षात्-क्रियमाणतदीयलोकोत्तरस्थिरत्वरम्यत्वसत्यत्वशास्त्रदृष्टित्वोचितकारित्वादिरूपप्रसिद्धः प्रकर्षो व्यज्यते। **भुवने**ष्विति बहुवचनेन त्रिभुवनव्यापित्वं, **गुणै**रिति प्रातिपदिकमात्रेण जन्म-नस्तदेकप्रवणत्वं, तत्रापि बहुवचनेन धीरोदात्तत्वनिःसामान्यसाहसत्वादिविक्रमोचितगुणगण-निधानत्वम्, **अस्मदि**ति बहुवचनेन सर्वाक्षेपिणा न केवलं तव, समरावतीर्णराक्षस-कुलस्य सकलस्य, **अभाग्या**दिति भाग्याभावे वाच्ये **यदन्यथासम्पत्तिमुखेनाभिधानं** (78b) तेन येषामप्यस्मत्पक्षपातिनां जीवनादृष्टमवशिष्टं तेषामपि विपर्यस्तमिति ध्वन्यते। तेनैतत्प्रतियोगिभयात्त्रैलोक्यविजयोपजातशौर्याभिमानिनोऽस्मद्भर्तुर्व्यर्थेति प्रकुतपोषकः।

**तरुणिमनी**त्यादि—**अनुमदनधनुरि**ति मदनधनुष उपाध्यायस्य समीप इति 'अनुर्यत्-समये'ति (पा. २।१।१५) समासः। **भ्रुवोरग्रे** शिष्यत्व [भूते] प्रत्ययादिभिः समानार्थत्वेऽपी-मनिजादीनां स्वरूपस्य व्यञ्जकत्वं सहृदयग्राह्यं स्फुटमेव। तथाहीमनिचा सौकुमार्यपरेण त्यक्त-बाल्यमुद्भिद्यमानरणरणकञ्च वयो ध्वन्यते, 'त्व'प्रत्ययेन तु कठोरता। एवमव्ययार्थस्य विशेष्यत्वेऽव्ययीभावस्तेन समासे मदनधनुषो न्यग्भावः प्रतीयते, ततश्च ततोऽप्यधिकं भ्रूलता ( लतया ) जगद्वशीकारसाम्राज्यमिति व्यज्यते, वाक्ये तु मदनधनुषः प्राधान्यमिति। उपान्वध्याङ्वस ( पा. १।४।१८ ) इति कर्मभूताधारेण सकलरचना (ललना)—मौलिन्यग्-भावनमभिव्याप्यत्वञ्च प्रतीयते, सप्तम्या त्वाधेयस्यैकदेशवृत्तितेति। तदेतदाह—**अस्ति कश्चि-**

---

47 **एषां वाचकत्व** इति 'पञ्चरूपा रसा' इति भामहविवरण उद्दिष्टमुद्भटमतमाक्षिप्तं स्यात्। तच्च काव्यालङ्कारसारसंग्रहोपरि लघुवृत्तावलोकनीयम्। व्यक्तिविवेक-कृतस्त्वेषां गमकत्वमर्थद्वारकमेव पारम्पर्येण न साक्षादिति तृतीयः पन्थाः।

**एवमन्येषामपि बोद्धव्यम्। वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपण उदाहरिष्यते। 'अपि'शब्दात् प्रबन्धेषु नाटकादिषु। एवं रसादीनां पूर्वगणित-भेदाभ्यां सह षड्भेदाः।**

---

**द्विशेष** इति। तथाच 'अप्रहतपदारब्धचमत्कारित्वं नाम कान्ति'रिति **वामनः**[48] (का. अ. सू. वृ. ३।१।२५)।

अभिक्षिप्ततया ग्रन्थगौरवं स्यादित्यभिप्रेत्य संक्षिपति **एव**मित्युपदर्शितदिगनुसारेण। तथाहि 'तटी (79a)तारं ताम्यती'त्यत्र (व. जी. १६७ पृ: ; ध्व. आ. लो. १६२पृ:) तटशब्दे पुंस्त्वनपुंसकत्वे अनादृत्य स्त्रीत्वमेव सहृदयाः समाश्रयन्ते 'स्त्री[ति] नामापि मधुर'मिति (व. जी. १६७ पृ: ) कृत्वा, कमलमिवेत्यादौ वक्तव्ये कमलायत इत्यादिकञ्च प्रयुञ्जते।

इदानीमुद्देशानुसारेण वर्णरचनानां व्यञ्जकत्वमुदाहर्तुमर्हतीत्यत आह **वर्णेति। नाटकादिषु** नाटकनाटिकाऽऽदिभिरभिज्ञानशकुन्तलरत्नावलीवासवदत्ता-[49] प्रभृतिः [परामृष्टः]। अत्र ह्यसं-लक्ष्यक्रमो रसादिध्वनिः स्पष्ट एव, साक्षाद्वर्णनिवेदितत्वेन विभावानुभावौचित्यचारुणः कथाशरीर-स्योपनिबध्यमानत्वात्। यत्तु ध्वनिकृता 'यत्र साक्षाद्वर्णनिवेदितेभ्यो विभावानुभावव्यभिचारिभ्यः स्वतो रसादिप्रतीतिरव्यवधानेन सोऽलक्ष्यक्रमस्य ध्वनेर्विषय' (ध्व.आ वृ.) इत्युक्तं तन्मुनेर्मतस्या-ननुगुणं, यतो विभाववन्नैव व्यभिचारिणः साक्षाच्छब्दप्रतिपाद्याः किन्तु रसवत् स्थायिवच्च विभावादिसंयोगेनैव प्रकाश्या भावत्वात्, तदिदमासृष्टेः सहृदयैरनुन्मीलितपूर्वं रनर्घ्यनिर्माणे व्यग्रचेतसो ग्रन्थकर्तुर्विस्मृतं ग्रन्थान्तरैकदेशत्वादनवधानवशाच्चास्योद्घोषणमात्मन एव दूषण-मित्युपेक्षणीयमेव।[50] प्रबन्धस्य च रसादिव्यञ्जकत्वे पञ्च प्रकाराः समाम्नाताः। ( ध्व. आ.

---

48 औज्ज्वल्यं कान्तिरिरिति सूत्रं...बन्धस्योज्ज्वलत्वं नाम यदसौ कान्तिरिति तदभावे पुराणच्छायेत्युच्यत इति वृत्तिरित्येवं मुद्रितपुस्तकेषु पाठः।

49 संज्ञया संज्ञिव्यपदेश इति 'वासवदत्ता'पदेन स्वप्नवासवदत्तनाटकस्य ग्रहणं सम्भवेत। तथात्वे भासनाटकं टीकाकृतः समये न विरलप्रचारमासीदिति। अथवा लोचनादिग्रन्थतोऽप्रत्यक्षस्तत्परिचयः सूचितः।

50 लक्षणकृतां गुणमाहात्म्यवादिनां प्राचीनानां रसोद्देशसमाहितानां प्राचीनतराणां भरतादीनाञ्चान्यैः पारिभाषिकसंज्ञाऽऽदिभिरुपस्थापितानामनुशासनानि ध्वनितत्त्व-सोदराणि ध्वनिकृच्छायामन्तर्भाव्यानीत्येतत्सूचनाय ध्वन्यालोकतृतीयोद्योतीय-ग्रन्थानुसरणं विपश्चिता ग्रन्थकृताऽत्र कृतम्। लक्षयितॄणामणीयस्यप्यलोक-

३।७ वृ. ) प्रथमं कथापरीक्षा। तत्रापि कथाऽऽनापः, सन्धिसन्ध्यङ्गघटनासौष्ठवेन ( 79b ) फलपर्यन्तताऽऽनयनं रसं प्रति जागरण', तदुचितविभावादिवर्णनेऽलङ्कारौचित्यमिति [च]। तत्र कथापरीक्षा विभावाद्यौचित्यचारुणः कथाशरीरस्योपनिबन्धः। तथाहि श्रृङ्गारवर्णनेप्सुना तादृशी कथाऽऽश्रयणीया यस्यामृतुमाल्यादेर्विभावस्य हर्षधृत्यादेः सञ्चारिणः स्फुट एव सद्भावः। तथेतिहासादिष्वपि कविना प्रबन्धं निबध्नता रसमयेन भवितव्यमिति स्वयं वोत्प्रेक्ष्य रसानुगुणत्वेन कथोन्नयनं विधेयम्। तद्यथा कालिदासेन **रघुवंशे**ऽजादीनां राज्ञां विवाहवर्णनं नेतिहासनिरूपितम्, यथा वाऽ**भिज्ञानशकुन्तले** दुष्यन्तेनाश्रमे शकुन्तलया सह गान्धर्वविवाहे कृते तस्यामेव सगर्भायां गृहागतायां न मयेयं विवाहितेत्यपह्नवः कृत इत्यार्षे तथाविधस्य श्रृङ्गारस्य परं भङ्गकारणमिति स्वयमुत्प्रेक्ष्याक्षेयं शापविस्मृततद्विवाहादिका रसानुकूल्येन कथा योजिता। यथा वा उर्वशी पुत्रजन्मानन्तरं पश्य त्वं, केनापि कार्यवशेन मम त्वया सह सङ्गमोऽभवदिति पुरूरवसा सह संवादं कृत्वा प्रयातेत्यार्षे, कालिदासेन तु विप्रलम्भश्रृङ्गारस्य परं विरागकारणमित्युत्प्रेक्ष्य **विक्रमोर्वश्या**मन्यथा कृतेति। एवमन्येष्वपि विरुद्धयोगाद्रसानुकूल्येन कविभिः कथायोजनं कृतमिति द्रष्टव्यम्। (80a) 'नहि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित् प्रयोजनम्। इतिहासादेव तत्सिद्धेः' ( ध्व. आ. ३।१४ वृः )। **हर-(हरि)विजये** तु कान्ताऽनुनयाङ्गत्वेन पारिजातहरणादि निरूपितमेवेति ( ध्व. आ. लो. १४८ पृः ) कथाऽऽवापः। तथा नाटकादावाख्यायिकाऽऽदौ सर्गबन्धादौ च मुखप्रतिमुखगर्भविमर्षनिवर्हणाख्या अन्वर्थनामानः पञ्च सन्धयः प्रारम्भयत्नप्राप्त्याशानियताप्तिफलयोगरूपावस्थापञ्चकसहिता यथायोगमुपक्षेपपरिन्यासादिसन्धयङ्गपरिपूर्णबीजबिन्दुपताकाप्रकरीकार्यलक्षणार्थप्रकृतियुक्ता ये मुनिनोक्तास्तेषां यथावद्घटनमिति फलपर्यन्तनयनम्। तत्राधिकारिकस्येतिवृत्तस्य पञ्चसन्धित्वं परिपूर्णमेव कर्तव्यमिति नियमः। यथा **रत्नावल्यां** सचिवायत्तसिद्धेर्धीरललितस्य वत्सराजस्य चक्रवर्तित्वादिफलान्तरानुबन्धिकन्यालाभफलोद्देशेन प्रस्तावनोपक्रमो(मौ)। एवं **सुभद्राहरणजानकीहरणा**दिषु तत्र तत्र द्रष्टव्यम्। प्रासङ्गिके त्वितिवृत्ते नायं नियमः। तदाह मुनिः—'प्रासङ्गिके

---

सामान्यशक्तिरस्त्येतदूरीकृत्यैव प्रसक्ता। यदाह "वाच्यानां वाचकानाञ्च यदौचित्येन योजनम्। रसादिविषयेणैतत् कर्म मुख्यं महाकवेः॥" इति, 'रीतिलक्षणविधायिना हि काव्यतत्त्वमेतदस्फुटतया मनाक् स्फुरितमासीदि'ति च। तदत्र स्फुटतया संप्रदर्शितमिति च रसादितात्पर्येण काव्यनिबन्धनं व्यञ्जनाव्यापारे महत्यास्था चेति युगपदेव निर्वन्धदृढं स्वमतस्थापनम्।

१७

भेदास्तदेकपञ्चाशत्

व्याख्याताः।

तेषां चान्योन्ययोजने ॥४३॥

संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया।

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति यावत्तेषां स्वप्रभेदैरेकपञ्चाशता

---

परार्थत्वान्न ह्येष नियमो भवे'दिति (ना. श. १६।१६) तथा यथाऽवसरमन्तराऽन्तरा रसस्योद्दीपनप्रशमने इति रसं प्रति जागरणम्। यथाऽलैवोद्दीपनम्, "अग्र' सो राआ उदअणो" इति (रत्ना. १ अः) सागरिकायाः प्रशमनं, वासवदत्तायाः पलायने ( 80b ) पुनरुद्दीपनं, चित्रफलकोल्लेखने प्रशमनं, सुसङ्गताप्रवेश उद्दीपनमित्यादि। तथा रससमवधानेन विभावादिघटनामेव कुर्वन्नान्तरीयकतया यमासादयति कविः स एव रसमार्गेऽलङ्कारो मत इति रूपकादेरलङ्कारस्य निबन्धोऽलङ्कारौचित्यम् ( ध्व. आ. २।१६-२० द्रः ) यथा—चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः। करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती॥ ( अभि. श. १।२० ) इयं हि शकुन्तलां प्रति प्रवृद्धाभिलाषस्य दुष्यन्तस्योक्तिः। 'हे मधुकर किंजातीयेयं शकुन्तलेत्येतत्तत्त्वमन्विष्यमाणा एव वयं हता आयासमात्रपात्रीभूताः। त्वमेव कृती यतः कदाऽस्याः कटाक्षेक्षणहेवाकिनीं तत्समयोचितवेपथुमतीं दृष्टिं चुम्बेयं, हठादनिच्छन्त्या अपि रतिसर्वस्वं वाऽधरं पिबेयं, कथमेषाऽस्मदभिप्रायव्यञ्जकं रहोवचनमाकर्णयेदिति यदस्माकं मनोराज्यपदवीमधिशेते तत्तवायत्नसिद्धम्। त्वं हि त्वत्सम्पर्कत्रासाच्चपलापाङ्गां तदनुभाववेपथुमतीं दृष्टिमुत्पलधिया पुनः पुनः स्पृशसि, श्रवणावकाशपर्यन्तत्वाच्च नेत्रयोरुत्पलशङ्काऽनपगमात् कर्णान्तिकगतो मृदु रणसि, त्वद्दशनभयात् करं व्याधुन्वत्या वदनानिलसौरभाकृष्टो रतिसर्वस्वमधर-(81a) मपि पिबसीति दृक्स्पर्शनाधरस्पर्शनकर्णोपान्तरणरणायितरूपभ्रमरस्वभाववर्णनात् स्वभावोक्तिरलङ्कारः प्रकृतस्याभिलाषश्रृङ्गारस्याङ्गत्वेनानुगुणतां भजमानः स्वयमेवापतित' ( व. ज. १३पृः ; ध्व. आ. लो. ८६ पृः ) इति। यमकदुष्करशब्दभङ्गश्लेषादयस्तु सम(रस)धाराऽतिरिक्तशब्दविशेषान्वेषणरूपप्रयत्नान्तरसाध्या इति रसाक्षिप्तस्य कवेर्मूलक्षतिकारिणां तेषां निवेशनमनौचित्यम्। 'यत्तु रसवन्ति कानिचित् कालिदासकृतानि **रघुवंशे** ऋतुवर्णने यमकानि दृश्यन्ते तत्रापि रसस्याङ्गता यमकादीनां त्वङ्गितैवेति' ( ध्व. आ. लो. २।१६, २।१७ )।

**संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन सङ्करेण परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने ?**

**वेदखाब्धिवियच्चन्द्राः ( १०४०४ )**

**शुद्धभेदैः सह**

**शरेषुयुगखेन्दवः ( १०४५५ ) ॥४४॥**

---

**एवमिति** पूर्वगणितभेदौ पदवाक्यप्रकाशरूपौ। **भेदाभ्यां सहेति**—यतश्च पूर्वपरिसंख्याताः पञ्चत्रिंशदर्थशक्तिमूलाः प्रबन्धमप्यनुबध्नन्तीति ते प्रबन्धप्रकाशकतया साक्षादलक्ष्यक्रमव्यङ्ग्या अपि पूर्वगणितानुप्रविष्टपदवाक्यप्रकाशरूपावपहाय भेदचतुष्टयपरिपुष्टाः। तदित्थं ध्वनेः प्रकाराः प्रथममेकपञ्चाशत् प्रकाशन्ते। **तेषाञ्चान्योन्ययोजने** "विन्यस्याधो गुण्य"-मित्युपक्रम्य "प्रत्युत्पन्नविधाने करणान्येतानि चत्वारी"ति दृशा एकपञ्चाशता गुणने षड्विंश[श]त्येकाधिका (२६०१) जायते। अस्याश्च संशयास्पदत्वादिमयसङ्करत्रयैकप्रकारसंसृष्टिरूपैः संयोगभेदैश्चतुर्भिर्गुणन एतावती संख्येत्याह **वेदे**त्यादि। वेदाश्चत्वारः, खं शून्यम्, (81b) अब्धिश्चत्वारः, वियत् शून्यं, चन्द्र एक इति। अङ्केष्वभ्यस्तकल्पनाया वैपरीत्यमिति तथा विन्यासः। अत्रापि **शुद्धभेदैः** पञ्चाशता [भेदैरेकपञ्चाशतो] योजने शराः पञ्च, इषवः पञ्च, युगानि चत्वारि, खं शून्यमिन्दुरेक इत्येवञ्च प्रमेयभेदः। [अयं] सर्वथा न प्रतिपादितो भवतीति चिन्त्यमेतत्[51]। सजातीयभेदैः साकं सङ्कलितोट्टङ्कनक्रमेण त्वमी ध्वनिप्रकारा रसदस्रशिखिद्रुमाः स्युः (१३२६)। तथाहि सङ्कलितस्य लक्षणं "सैकपदाहतपददलमेकादिचयेन भवति सङ्कलितम्।" सैकं पदं ५२, तेनाहतं पदं २६५२, तस्य दलम् १३२६। अथवा 'पदयुतपदवर्गदलं सङ्कलितम्'। तत्र 'सदृशद्विराशी घात' इत्यादि[-ना] पदस्य वर्गः २६०१, समपदेन

---

51 टीकाकृता श्रीधरेणात्र प्राचीनानां ज्योतिर्विदां श्रीधराचार्याणां मतमुद्धृतम्। तत्तु तेषां त्रिशत्याख्यग्रन्थे स्थितमिति सम्भाव्यते। श्रीधराचार्यास्तु प्रामाणिकत्वेन सिद्धान्तशिरोमणौ बीजगणितांशे स्मृताः। चण्डीदासः 'सान्धिविग्रहिको गणनाऽऽदिकं निखिलं जानातीत्यतस्तदुक्तिरेव लिख्यत' इति टीकाकृतोऽस्य प्रामाणिकसङ्गतिमाह। यद्यपि च विश्वनाथादिभिः स एवानुसृतः (प्रत्युत्पन्नं गुणनेन लब्धमिति कृत्वा) तथापि न केवलं श्रेणीबद्धसङ्कलितस्यायं नियमः, सङ्करेण त्रिरूपेणोपदिष्टस्य विचारचर्चाचतुरो मिश्रकविधानमपि साधनीयमिति ह्रस्वतरैव संख्याऽऽयातीत्याशयेन।

तत्र दिङ्मात्रमुदाह्रियते—

खणपाहुणित्वा देअर जाआए सुहअ किंपि दे भणिआ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई ॥१११॥

(गा. स. वे. ९६३)

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः किमनुरणनन्यायेनोपभोग एव व्यङ्ग्यो व्यञ्जक इति सन्देहः।

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।

---

युतः २६५२, तस्य दलं १३२६ इत्याचार्यश्रीधरदर्शनेन सङ्कलितम्। अन्यैरप्युक्तं यथा 'एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु। तयोरर्धेन संगुण्य-(? समार्धेन समं गुणय) मेतत् सङ्कलितं लघु॥ एको राशिर्द्विधा ५१,५१ एक एकाधिकः समः ५२, अस्यार्द्धम् २६, एकपञ्चाशत् षड्विंशत्या हता १३२६, ततः प्रागुट्टङ्किते सङ्करसंसृष्टिभेदचतुष्टयेन गुणने वेदखानलसायकाः ५३०५ (५३०४)।[52] अत्र शुद्धप्रकाराक्षेपे बाणेषुगुणपञ्चिणः (५३५५)[53]।

**खणेत्यादि।** अत्र काचिदुत्सवागता कस्यचित् सानुरागा स्वसख्यास्तद्भ्रातृजायाया मुखेन वलभीगृहे दत्त-(82a) सङ्केता। सा तु सखी तत्समागमार्थं भङ्ग्या देवरस्येदमाह—क्षणप्राधुणिका देवर जायया सुभग किमपि ते भणिता। रोदिति पडोहरे [पश्चात्स्थिते] शून्यवलभीगृहे अनुनीयतां वराकी॥ क्षण उत्सवे क्षिप्रञ्च प्राहूता निमन्त्रयानीता। अत्रानुनीयतामिति पदमनुनयलक्षणं स्वार्थमत्यजत् किं सम्भोगेनैकान्तोचितेन तोष्यतामित्यर्थान्तरे संक्रमितम्, अथवाऽनुनयलक्षणेत्यादि (**अनुरणनन्यायेने**त्यादि)।

**स्निग्धश्यामले**त्यादि। '**पयोदसुहृदो** मयूराः, **केकाः** षड्जसंवादिनो

---

52 वस्तुतस्तु ततो विचारे टीकाकृदधिगतसंख्याऽपि न फलतीति **विज्ञप्रियायां** साहित्यदर्पणटीकायां महेश्वरमन्तव्यं सारवदेव मन्यते। यत्तु प्रदीपकृता काव्यप्रकाशग्रन्थसमुद्दिष्टसंख्यासंस्थानसमर्थनायां बद्धपरिकरेण दर्पणोक्तितो मतमेतदीयमनुपादेयमिति दर्पणमालिन्यमुद्भावितं तत्तस्यैतदस्थाने पदाधानेन साहसिक्यमेव।

53 लीलावत्यां करणसूत्रं 'सैकपदघ्नपदार्धमथैकाद्यङ्कयुतिः किल सङ्कलिताख्ये'ति। वस्तुतस्तु सहृदयहृदयव्यामोहनायेदमिति न गणनातात्पर्ये काऽप्यास्थाऽऽस्थेया।

**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव ॥११२॥**

( ध्व. आ. २।१ वृः )

**अत्र 'लिप्ते'ति 'पयोदसुहृदा'मिति चात्यन्ततिरस्कृतवाच्ययोः संसृष्टिः। ताभ्यां सह 'रामोऽस्मी'त्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन 'राम'पदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः संकरः।**

---

मधुराः शब्दविशेषाः।[54] एवमेते सौन्दर्यातिशयभाजो वर्षासमयोचिता घना वियोगिदुःखावस्थामु( या उ )द्दीपकाः कामं सन्तु, **रामोऽहं सर्वं सहे, दृढं** सातिशयं कठोरहृदयतया। कठोरहृदयत्वञ्च मेघाद्युद्दीपितसाम्प्रतिकावस्थासहनापेक्षया, न तु सीतावियोगदुःखसहनापेक्षया। अतस्तद्वियोगदुःखसहने गुणीभूतव्यङ्ग्यता नैव। तथाभूतैर्मेघादिभिरेव सौकुमार्यातिशयात्। सीतां प्रति निश्चितः क्लेशातिशय इत्याह **वैदेहि तु कथं भविष्यतीति**। अतएव भवनगेवास्या असम्भाव्यमिति हृदयनिहितां स्मरणशतविकल्पपरम्परया प्रत्यक्षभावितां हृदयविदलनोन्मुखी' सनिर्वेदसम्भ्रमं तत्समाश्वासनायाह **ह हा हा देवि धीरा भवे**ति (लो.द्र.६१-६२पृः)। **देवी**ति युक्तं तव धैर्यमित्यर्थः। तदिह **लिप्त**शब्दः स्वार्थतिरस्कारेण व्यापित्वप्रकाशनादत्यन्त-(82b) तिरस्कृतवाच्यः। एवं **पयोदसुहृ**च्छब्दः स्वार्थतिरस्कृतेः प्रमादोन्मदिष्णुताऽऽदिप्रकाशनात् स एव। अनयोश्च परस्परनैरपेक्ष्यात् संसृष्टिः। यदि वा **'स्निग्ध'**शब्दो घृतादिकृतस्नेहरूपार्थतिरस्कारेण नेत्राभिरामत्वाद्यत्यन्ततिरस्कृतवाच्य इति स्निग्धलिप्तयोः संसृष्टिः। **रामोऽस्मीति** रामपदं शिथिलितस्वार्थोपयोगि-(ग)तया **'कठोरहृदय'**पदसाचिव्येन राज्यभ्रंशवनवाससीताऽपहारादिभिः सामान्यापमानसहत्वशत्रु[त्व]निराकरणात्तुभ्यमिज्ञा-( जाज्वल्या )द्यर्थान्तरसंक्रमितवाच्यम्। पूर्वाभ्यामत्यन्ततिरस्कृतवाच्याभ्यामनुग्राह्यानुग्राहकरूपतया सङ्करः। यो लिकेण (योऽत्रैकेन) व्यञ्जकेनानेको ध्वनिः स तृतीयः सङ्करो यथाऽत्रैव 'राम'शब्द एवार्थान्तरसंक्रमितवाच्यः समुद्दीपनविरोधो (विभावो)-द्बोधितस्य विप्रलम्भस्य व्यञ्जकः। सर्वस्मिन्नेव रसाद्यात्मनि काव्येऽलक्ष्यक्रमव्यङ्ग्यरूपस्य रसभावलक्षणस्य प्रभेदप्रतीत्यपेक्षयैकव्यञ्जकवाक्यद्वारेण व्यञ्जकत्वं सम्भवत्येव यथाऽत्रैव रसध्वनेर्भावध्वनेश्चैकेन व्यञ्जकेन व्यञ्जनाद्विप्रलम्भस्य तद्व्यभिचारिणश्च निर्वेदशोकावेगात्मनश्चर्वणीयत्वात्। तदेवं ध्वनेः प्रभेदं प्रति सङ्करसंसृष्टिभ्यां चत्वारो भेदा उदाहृताः।

---

54 अत्रानदकलाः केका इति वक्तव्यम्। यद्वा श्रीधरव्याख्याने कला इति विशेष्यपदम्।

**एवमन्यदप्युदाहार्यम् ।**

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम चतुर्थ उल्लासः ॥४॥

---

**एवमन्यदिति**—'यथा 'न्यक्कारो ह्ययमेव मे यदरयः' (७म उः) इत्यत्र 'मे' इति षष्ठ्या प्रकाशितः शत्रुशत्रुमद्भा(83a)वलक्षणः सम्बन्धो रावणस्य सर्वकालं निःसपत्नतया शत्रूणामप्य-सहमानस्य त्रैलोक्यविजयोचितशौर्याभिमानव्यञ्जकः। 'हि' शब्दो 'न्यक्कार'शब्दश्चाश्रुतपूर्वत्वमति-शयञ्च व्यनक्ति। 'यदि'त्यनेन शत्रूणामसम्भाव्यमानत्वं व्यज्यते। 'अरय' इति बहुवचनं जगति कोऽपि रिपुर्नास्ति न भविष्यति किमुत बहव इति व्यनक्ति। 'तापस' इति तद्धितेन तपश्चर्यामात्रप्रवणतया पौरुषहीनत्वं व्यज्यते। 'तत्रापि' शब्देन निपातसमुदायेनात्यन्तासम्भाव्य-मानत्वम्। 'असा'विति तापसोऽपि न कदाचित् भार्गवप्रायः शत्रुत्वसम्भावनामात्रपात्रं स्यात् किमयं वराक इति रामस्य लाघवातिशयं व्यनक्ति। मत्कर्तृका यदि जीवनक्रिया तदा हननक्रिया तावदनुचिता, तस्यां स च कर्तेति **श्रीमदाचार्याः**।[55] 'अपि'शब्देन मनुष्यमात्रकः।' (ध्व. आ. लो. ३।१६ वृः) 'अत्रैवे'ति लङ्कायां मदधिष्ठितायामा सृष्टे-रदृष्टपूर्वराक्षसवधत्वं प्रकाशयति। 'निहन्ती'ति वर्तमानकालतया निःशेषेण राक्षसवधस्य पुनः पुनः सम्पादनमभिव्यज्यते। 'राक्षसबल'मिति कर्मशक्तिरेकस्याप्यत्यन्तमसम्भाव्यमानो मानुषमात्रकृतो वधः किमुत मद्बलस्येति द्योतयति। अन्ये तु 'जीवती'ति तिङा प्रकाशितया रामस्य कर्तृशक्त्या येनाधन्येन स्वपौरुषाध्मातेन राक्षसानां किञ्चिदपराद्धं स तत्कालमेव स्वसैन्यं कृता-(83b)न्तदन्ताशनिपूर्त्ततायाः पात्रतां नीतोऽस्माभिः, तत्रापि वर्तमानकालतयैवमपकारिणो रामस्य तत्कालमेव क्षणमात्रमपि जीवितमसम्भाव्यं मयि स्थिते किं पुनरद्यापीति द्योत्यत इत्याहुः। 'अहो' इत्यश्रुतपूर्वशत्रुसम्भवाद्व्यभिचारिविस्मयद्योतकः। 'रावण' इति पदं स्वशिरश्छेदपरितोषितशशिशेखरत्वकैलासोन्मूलनक्षमत्वस्वपराक्रमोत्कर्षाधरीकृतलोक-पालत्वादीनि व्यनक्ति। स्वमर्थमवज्ञारूपमपरित्यज्य 'धिक् धिगि'ति निपातेन शत्रुं जितवानित्याख्यायिकेयमित्युपपदसमासेन सक्विपा शक्रोऽपि येन तथा निर्जितः स तापस-मात्रेऽप्यकिञ्चित्करः सम्पन्न इति व्यज्यते। प्रशब्देन [प्रकर्षेण] बोधितं विद्यते यस्येति मतुपा कृतवतुच्छद्मना च किमस्माकं मध्ये कश्चित्तापसमात्रपराजययोग्यो नैव सम्भावितो युष्माभि-

---

55 आचार्या इत्यापाततोऽभिनवगुप्तपादानां ग्रहणम्। अन्ये त्वित्युद्देशस्यास्य ध्व. आ. लोचनेऽनुपलम्भात्तदुद्दिष्टानां भट्टतौतपादानामन्येषां वाऽलाभात् केषाञ्चित् प्राचीनतराणां ध्वन्यालोकटीकाकृतां परामर्शः स्यात्।

र्येदयमविद्यमानविरोधोऽकाण्ड एव महता प्रयत्नेन कृतविरोधः कुम्भकर्ण इति प्रकाश्यते। 'स्वर्गे'त्यादि समासस्य स्वपौरुषानुस्मरणं प्रति व्यञ्जकत्वं 'ग्रामटिके'ति स्वार्थिकेन टिकनाम्ना प्रत्ययेन चाबहुमानास्पदत्वं द्योत्यते। 'वि'शब्दो लुण्ठनसाकल्यव्यञ्जकः। 'वृथे'ति स्वात्मपौरुषनिन्दाव्यञ्जकः। 'भुजै'रिति बहुवचनेन प्रत्युत भारमात्रमेत इति व्यज्यते।' (ध्व. आ. लो. १५३-५४ पृः) तदित्थमेभिः शब्दैरेव गुणीभूत-(84a) व्यङ्ग्यविशिष्टैः पदार्थैर्विभावादिरूपतयाऽलक्ष्यक्रमव्यङ्ग्यो रौद्ररस एवानुगृह्यत इत्यनुग्राह्यानुग्राहकभावेन गुणीभूतव्यङ्ग्यसंकीर्णोऽत्र ध्वनिः। न च तापसादीनां पदानां स्वार्थपरित्यागेनार्थान्तरप्रकाशनादर्थान्तरसंक्रमितवाच्यत्वमिति ध्वनिसंसृष्टिर्न तु गुणीभूतव्यङ्ग्यत्वमित्याशङ्कनीयम्, एषां पदानां विवक्षितवाच्यत्वात्। अर्थान्तरसंक्रमितवाच्यो हि ध्वनिरविवक्षितवाच्य इति प्रागुक्तम्, तापसादिषु पदेषु व्यङ्ग्यविशिष्टं वाच्यं प्रतीयते, न तु व्यङ्ग्यधर्मान्तरपरिणतम्, अंशेनापि स्वार्थस्यापरित्यागात्। तस्माद्वाक्येऽत्र ध्वनिः, पदानि तु गुणीभूतव्यङ्ग्यानि। अतएव यथा ध्वनेः प्रभेदोत्तराणि (प्रभेदान्तराणि) पदार्थवाक्यार्थाश्रयत्वेनाविरोधीनि परस्परसंकीर्णत्वात्तथाऽत्रापि पदार्थाश्रयत्वे गुणीभूतव्यङ्ग्यस्य वाक्यार्थाश्रयहेतुध्वनेः सङ्कीर्णतायामविरोधः। किञ्चैकस्य व्यङ्ग्यस्य गुणप्रधानभावो विरुद्धो न तु व्यङ्ग्यभेदापेक्षयाऽस्ति विरोध इति। 'रावण'पदे तु यो ध्वनिस्तेन रौद्ररसप्राधान्यात् संसृष्टत्वम्। एकव्यञ्जकानुप्रवेशस्तु तैरेव पदैर्गुणीभूतव्यङ्ग्यस्य प्रधानभूतस्य च रसस्य विभावादिद्वारतयाऽभिव्यञ्जनात्।

यथा वा—कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानो कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः। राजा (84b) दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः (वे. सं. ४।२६)॥ अत्र 'कर्ते'त्यादिना छद्मना परिगृहीतस्यापि धर्मराजराज्यस्याधुनाऽपगमे तावन्मात्रकालिकनृशंसता द्योत्यते। 'जतुमये'त्यादिना तथा विश्रब्धभ्रातृदाहलक्षणमहापातकनिबन्धनमाततायित्वं व्यज्यते। 'कृष्णे'त्यादिना तादृशपापकारिणोऽस्य न किञ्चिदप्यपकृतमस्माभिरिति द्योत्यते। 'सोऽभिमानी'-[ति] क्व सम्प्रत्यभिमानित्वं गतं यत् पलाय्य स्थितमिति प्रकाशयति। 'पाण्डवा यस्य दासा' इति तदीयोद्घोषणानुकारोऽयममर्षातिशयव्यञ्जकः। 'राजे'ति सम्प्रति तथाविधभ्रातृमित्रसैन्यपरिक्षयेऽपि जीव[न]मात्ररक्षापरायणः शब्दमात्रावशिष्टः संवृत्त इति व्यनक्ति। 'दुःशासनादे'-रित्यादिना सर्वे ते हता अस्माभिरिति व्यज्यते। 'अङ्गराजस्य मित्र'मित्यनेन लोकोत्तरशौर्यबलौचित्यनिधानभूतो विश्वासैकस्थानं जयाशाहेतुं योऽङ्गाधिपतिः सोऽपि हत इति द्योत्यते। 'दुर्योधन' इति दुःखेन योधयितुं शक्य इति तथा पलायनेन स्वार्थपरित्यागादुपहसनीयतां द्योतयति। 'न रुषे'त्यर्जुनापेक्षया तं प्रत्यसंरम्भव्यक्तिर्भीमापेक्षया काकुवशात्

क्रोधातिशयप्रकाशनम्। तदमींभिर्व्यञ्जकैर्व्यभिचारी गर्वः प्रकाश्यते। तेन चार्जुनाश्रयत्वे-(85a)न वीरो भीमाश्रयत्वेन रौद्रः प्रकृष्यत इति। एवञ्च 'कर्त'त्यादिभिर्व्यङ्ग्यविशिष्टैः पदार्थैर्विभावादिरूपस्तथा वाक्यार्थीभूतो रसोऽनुगृह्यत इत्यनुग्राह्यानुग्राहकत्वभावेन सङ्कीर्णत्वम्। गुणीभूतव्यङ्ग्यता च सुगमैव, वाक्य(च्य)स्यैव क्रोधोद्दीपकत्वात्। एकव्यञ्जकानु-प्रवेशस्तु पूर्ववदेव। 'पाण्डवा यस्य दासा' इत्यत्र दासैश्च कृतकृत्यैः स्वाम्यवश्यं द्रष्टव्य इत्यर्थशक्तिमूलाऽनुरणनरूपताऽपि। उभयतोऽपि च चारुत्वादेकपक्षपरिग्रहे प्रमाणाभाव इति सन्देहयोगेन सङ्कीर्णत्वम्।

ध्वनिगुणीभूतव्यङ्ग्यसंसृष्टिर्यथा—तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां क्षेमं भद्र कलिन्दशैलतनयातीरे लतावेश्मनाम्। विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः॥ (ध्व. आ. वृ. २१६ पृः) 'तेषा'मिति येष्वस्माभिः क्रीडितमिति भावः। 'गोपवधूविलाससुहृदा'मित्यादिना न केवलमस्माकं तानि रहःस्थानानि शृङ्गारैकरसस्य हरेरपीति लतागृहस्य सौन्दर्यातिशयप्रकाशाद्वर्णोत्कर्षशोभाऽतिशय-व्यञ्जकता। 'जान' इति तदुपयोगस्मरणव्यञ्जकः। 'विच्छिन्न' इत्याद्य'धुने'त्यन्तं तथा, शृङ्गारैकरसानस्मान् विहाय सम्प्रत्यन्यो न कश्चित्तत्र तथाविध इत्यभिप्रायात्। एतदेव 'जरठीभवन्ती'त्य(85b)नेन व्यज्यते, पल्लवानामन्यस्य तथाऽनुपयोगात्। गोपवध्वन्त-र्भावेऽपि राधाया पृथगुपादानं तां प्रति हरेः प्रेमातिशयप्रकाशनार्थम्, अतएव 'सुहृत्'-'साक्षि'शब्दाभ्यां वेश्मनां चैतन्याध्यारोपेऽपि गोपवधूविलासे सौहार्दं चरन्ति राधाया विलासे साक्षित्वमात्रे पात्रीभवन्ति तानि, तदीयरहस्यदर्शने चमत्कारातिशयेन व्यापारशून्यत्वात्। तदिह 'सुहृ'च्छब्दे 'साक्षि'शब्दे चाविवक्षितवाच्यो ध्वनिः। 'त' इति पदेनासाधारणगुणगणाभि-व्यक्तावपि न चारुत्वमवलक्ष्यते, वाच्यस्यैव स्मरणस्य प्राधान्येन चारुत्वहेतुत्वात्। एवं 'जान' इत्युत्प्रेक्ष्यमाणानन्तधर्मव्यञ्जकेनापि वाच्यमेवोत्प्रेक्षणरूपं प्रधानीक्रियत' (ध्व. आ. लो. २२६ पृः) इति पदद्वयेऽत्र गुणीभूतव्यङ्ग्यता। तदनयोः परस्परनैरपेक्ष्यात् संसृष्टत्वम्॥

इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते काव्यप्रकाशविवेके चतुर्थ उल्लासः॥४॥

---

## परिशिष्टम्

श्रीधरटीकामातृकायामनुपलभ्यमानांशे (२५-२७ पृष्ठस्थितमूलोपरि) सरस्वतीतीर्थकृतबालचित्तानुरञ्जिनीतः प्रकृतोऽंशः समुद्ध्रियते यथा—

**परमाणुत्वादीना**मिति—अथवा विशेषाधानहेतुर्गुण इत्यव्यापकं लक्षणम्। 'अणु महद्दीर्घं ह्रस्वं चे'ति (वै. सू. ७।१।११) कणादेन गुणत्वेनाभिमतानामणुत्वादीनां नित्यत्वेन विशेषाधायकत्वाभावादित्यपरशङ्का। तेषां वस्तुतो गुणत्वाभावान्नाव्यापकमित्याह **परमाणुत्वादीना**मिति। परमाण्वादीनामिति पाठे भावप्रधानो निर्देशः। न चैकत्वाज्जातेरुपाधित्वमस्तु? गुणादीनामुपाधित्वे प्रतिवस्तुभिन्नत्वादानन्त्यादिदोषसम्भव इत्याशङ्क्याह **गुणे**ति। **आश्रयभेदाद्भिन्न** इव प्रतीयते परमार्थतस्त्वेक एव शुक्लादिर्गुणः सर्वत्रेत्यर्थः। तदुक्तं 'कर्मैकं जातिरप्येका जगत्येकः सितो गुण' इति। एकस्योपाधिवशादनेकविधत्वप्रतीतौ दृष्टान्तमाह **यथे**ति। **मुकुरो** दर्पणः। **भेदपक्षो**(?) **लक्ष्यत** इत्यनुषज्यते।

'जात्यादि'रित्येतदुपपाद्येदानीं 'जातिरेवे'ति पक्षमुपपादयति—**हिमपय** इत्यादिना। **बाल**शुकाद्युच्चारणभेदेन भिन्नेषु डित्थशब्देषु डित्थशब्दत्वं सामान्यमस्ति, तदेव पिण्डे आरोपिते स हि डित्थशब्दाभिधेयमित्यर्थः। जातिमाह—**प्रतिक्षण**मिति प्रतिक्षणं भिन्नेषु पिण्डेषु स्वाभाविकं डित्थत्वं सामान्यमभिधेयमित्यर्थः। एतत्तु वैनाशिकमतानुसारेण, प्रत्यहं कारणासंप्रवेशान्नास्त्यन्तरमिति वैशेषिकमतानुसारेण वा जातिरेवेति पक्षमुपसंहरति **जाति**रिति। न(8b)नु विकल्पान्तराणामपि सत्वात्तानि कुतो नोपन्यस्तानीत्यत आह **तद्वा**निति जातिमान्, 'जातिव्यक्त्याकृतयस्तु पदार्थ' इति नैयायिकं [मतम्]। **अपोह** इतरव्यावृत्तिः संकेत इति बौद्धैरुक्त इत्यर्थः। प्रयोजनसद्भावे गौरवमप्यङ्गीकार्यमित्यत आह **प्रकृतेति**। मतद्वययोरुपन्यासेनैव संकेतितसाकल्यप्रतीतेर्मतान्तरोपन्यासो व्यर्थ इत्यर्थः।

वाचकं शब्दमभिधाय लाक्षणिकं विवक्षितं तदुपयुक्तलक्षणालक्षणोपयोगित्वेन मुख्यार्थमाह **स इति**। श्लोकस्थस्य स इत्यस्य चार्थमाह **स इति**। **अस्येती**ति—अत्र साक्षात्संकेतितेऽर्थे शब्दस्य व्यापारोऽभिधेत्येतावल्लक्षणम्। **मुख्य** इति वक्ष्यमाणारोपितलक्षणाऽपेक्षयोक्तम्, अन्यथा साक्षात्सङ्केतितेऽर्थे शब्दस्य व्यापारान्तराभावान्मुख्यग्रहणमनर्थकं स्यात्। लक्षणाया लक्षणमाह **मुख्यार्थे**ति। मुख्यार्थबाधयोगाभ्या**मन्योऽर्थो लक्ष्यते** प्रतिपाद्यत इति **यत् सा लक्षणे**त्येतावल्लक्षणम्। नन्वेवं सति यच्छब्देन लक्ष्यत्वपरामर्शः स्यात्, न ह्येषा लक्षणा। लक्ष्यत्वं लक्ष्यधर्मः लक्षणा तु लक्षकधर्म इति चेन्न, यच्छब्देन

लक्ष्यत इत्याख्यातार्थगुणीभूतं प्रतिपादनमात्रमेव परामृश्यात् (श्यते) प्रतिप्रादनं तु प्रतिपादक-धर्म एव अतो नोक्तदोषः । अथवा **यत्** यतो व्यापारा**दन्योऽर्थो लक्ष्यते सा लक्षणा** । सेदि प्रतिनिर्दिश्यमानलिङ्गोपादानं 'रूढितोऽप्यप्रयोजना'दिति लक्षणाविभागपरम् । रूढिलक्षणा प्रयोजनलक्षणा चेति विभागः । ननु लक्षणाऽन्तर्भूतत्वं तथात्वे एकैकस्यान्तर्भावेऽव्याप्तिः । उभयान्तर्भावत्वेऽसम्भवः ।

लक्षणवाक्यमुदाहरणाभीष्टत्वेन व्याकरोति **कर्मणी**त्यादि । कुशान् लाति आदत्त इति कुशल इति मुख्योऽर्थो निपुणे न सम्भवतीत्याह **दर्भग्रहणे**ति । प्रयोजन-लक्षणायामपि मुख्यार्थबाधं दर्शयति **गङ्गायां घोष** इति । व्याकरोति **विवेचक-त्वादा**विति । रूढिलक्षणायां सामीप्यादि**रूढित** इत्यस्यार्थप्रसिद्धेः प्रसिद्धं प्रयोजनमाह **तथेति** । येषां पावनत्वादीनां तथाऽतिशयेन (9a) न प्रतीतिस्तत्रातिशयेन प्रतिप्रादनरूपा-**रोपिता क्रिये**त्येतद्व्याचष्टे **स** इति । यद्यपि गङ्गायां घोष इत्यत्र गङ्गाशब्देन प्रत्यायितं स्रोतस्तीरं लक्षयतीत्यर्थव्यापारो लक्षणा न शब्दव्यापारस्तथापि वाच्यधर्मो वाचके शब्दे लक्ष्यत आरोप्यते, अतः शब्दो लाक्षणिक इत्यर्थः । आरोपिते हेतुमाह—**सान्तराधर्मनिष्ठ** इति । अन्तरं व्यवधानं तेन सह वर्तते व्यवहितस्तीरादिः स हि मुख्यमव्यवधानात्, अत स्तीरादिविषयो व्यापारो मुख्यार्थगत एव । न तु निवृत्तव्यापारो गङ्गाऽऽदिशब्दगतः—शब्देन संभवतीति तत्रारोप्यत इत्यर्थः ।

विभागाभावाद्रूढिलक्षणामुपेक्ष्य प्रयोजनलक्षणां विभजते **स्वसिद्धय** इति । प्रयोजन-लक्षणा द्विविधा शुद्धा गौणी च । शुद्धोपादानलक्षणा लक्षणलक्षणा चेति द्विविधोक्ता । **स्वसिद्धये पराक्षेप** इत्युपादानं **परार्थं स्वसमर्पण**मिति लक्षणम् । उपादानलक्षणा-मुदाहरणमुखेण व्याकरोति **कुन्ता** इति । **ततः** कारणात् कुन्तानामात्मोपादानेनैव प्रवृत्तत्वादुपादानलक्षणाऽजहत्स्वार्थेत्यर्थः । अत्र प्रयोजनं बाहुल्यप्रतीतिः, कुन्तिनः प्रविशन्तीत्युक्ते कुन्तानां बाहुल्यप्रतीतिर्न स्यात् । केचित्तु **गौरनुबन्ध्य** इत्यादिकमुपादान-लक्षणाया उदाहरणमाहुः । तन्मतं दूषयितुमनुवदति **गौरिति** । श्रुतिः प्रभुसम्मिततया बन्धनस्यावश्यकर्तव्यतां दर्शयति । **श्रुती**ति स्वबन्धनसिद्ध्यर्थं जात्या व्यक्तिरूपं विशेष्यं धर्मिणं न गता कुतो **विशेषणे** जातिरूपे धर्मे **क्षीणशक्तिर्विर**तव्यापारेति परमतमनूद्य तदसङ्गतमिति प्रतिजानीते **इती**ति । तत्र हेतुमाह—**न ह्यत्रे**ति कुन्ताः प्रविशन्तीत्यत्र बाहुल्यप्रतीतिवदत्र किञ्चित् प्रयोजनमस्तीत्यर्थः । तर्हि रूढिः स्यात्तत्राह **न वे**ति ।

---

# ग्रन्थनामसङ्केतः

| सङ्केतः | ग्रन्थनाम | संस्करणम् |
|---|---|---|
| अः कोः | अमरकोषः | |
| अः कौः | अलङ्कारकौस्तुभः | (कविकर्णपूरकृतः V.R.S.) |
| अभि. शः | अभिज्ञानशकुन्तलम् | (·ईश्वरचन्द्रविद्यासागर सं) संवत् १६२८ |
| अभिः भाः | अभिनवभारती | |
| अ. र. आ. | अलङ्काररत्नाकरः | (पुणा सं) |
| अ. रा. | अनर्घराघवम् | |
| अ. वृ. मा. | अभिधावृत्तिमातृका | |
| अ. श. | अमरुशतकम् | |
| अ. श. र. स. | ,, रसिकसञ्जीवनी | (निर्णयसागर सं) |
| अ. स. | अलङ्कारसर्वस्वम् | (निर्णयसागर २य सं) |
| उ. कु. स | उद्भटकृतं कुमारसम्भवम् | |
| उ. रा. च. | उत्तररामचरितम् | |
| ऊ. ह. | ऊषाहरणम् | |
| ऋ. सं. | ऋग्वेदसंहिता | |
| औ. वि. च. | औचित्यविचारचर्चा | (काव्यमाला १ गुः) |
| क. अ. | कप्फिणाभ्युदयम् | (श्रीगौरीशङ्करसम्पादितम् ) |
| क. म. | कर्पूरमञ्जरी | |
| क. व. स. | कवीन्द्रवचनसमुच्चयः=सुभाषितरत्नकोषः (Har. Or. Ser.) | |
| काद. | कादम्बरी | |
| का. अ. सा. सं. | काव्यालङ्कारसारसंग्रहः | |
| ... ...ल. वृ. | लघुवृत्तिः | (प्रतीहारेन्दुराजकृता) |
| ... ...वि. | विवृतिः | (वडोदा सं) |
| का. अ. सू. वृ. | काव्यालङ्कारसूत्रवृत्तिः | |
| का. आ. | काव्यादर्शः | |

| सङ्केतः | ग्रन्थनाम | संस्करणम् |
|---|---|---|
| का. क. सा. | कादम्बरीकथासारः | (अभिनन्दकृतः निर्णयसा. सं०) |
| का. कौ. | काव्यकौतुकम् | |
| का. नी. सा. | कामन्दकीयनीतिसारः | (वडोदा सं) |
| का. प्र. दी. | काव्यप्रकाशदीपिका | (चण्डीदासकृता) |
| का. मी. | काव्यमीमांसा | (वडोदा सं) |
| का. सू. | कामसूत्रम् | (वात्स्यायनकृतम् ) |
| कि. अ. | किरातार्जुनीयम् | |
| कु. म. | कुट्टनीमतम् | (Bib. Ind. edn.) |
| कु. स. | कुमारसम्भवम् | |
| कु. स. सं | कुमारसम्भवसञ्जीवनी | |
| कृ. रा. | कृत्यारावणम् | |
| कौ. अ. शा. | कौटिल्यार्थशास्त्रम् | (Jolly's edn.) |
| ख. प्र. | दशावतारखण्डप्रशस्तिः | |
| ग. व. | गउडवहो | (मुम्वाइ संस्कृत सिरीज सं) |
| गा. स. | गाहासत्तसई | (निर्णयसागर सं) |
| गा. स. वे. | गाहासत्तसई | (वेवरसम्पादिता) |
| च. आ. | चन्द्रालोकः | (काशी सं) |
| चा. | चान्द्रव्याकरणम् | |
| चि. मी. | चित्रमीमांसा | |
| चो. प. | चोरपञ्चाशत् | |
| छ. रा. | छलितरामम् | |
| छ. सू. | छन्दःसूत्रम् | ( पिङ्गलकृतम् ) |
| जा. वि. | जाम्बवतीविजयम् | |
| टु. टी. | टुप्टीका | |
| त. वा. | तन्त्रवार्त्तिकम् | |
| ता. वत्स. | तापसवत्सराजम् | (यतिराज सं) |
| तै. उप. | तैत्तिरीयोपनिषत् | |
| द. चा. | दरिद्रचारुदत्तम् | |

| सङ्केतः | ग्रन्थनाम | संस्करणम् |
| --- | --- | --- |
| द. रू. | दशरूपकम् | |
| द. रू. अ. | दशरूपावलोकः | |
| दे. श. | देवीशतकम् | (काव्यमाला ६ गुः) |
| ध्व. आ. | ध्वन्यालोकः | ( निर्णय सा सं ) |
| ध्व. आ. वृ. | ध्वन्यालोकवृत्तिः | ( निर्णय सा सं ) |
| ध्व. आ. लो. | ध्वन्यालोकलोचनम् | ( निर्णय सा सं ) |
| ध्व. आ. लो. अ. | ध्वन्यालोकलोचनाञ्जनम् | (माद्राज सं) |
| न. सा. च. | नवसाहसाङ्कचरितम् | |
| ना. आ. | नागानन्दम् | |
| ना. शा. | नाट्यशास्त्रम् | (१-२७अ.वडोदा, २८-३६अः निर्णय सा सं) |
| नी. श. | नीतिशतकम् | |
| न्या. कु. अ. | न्यायकुसुमाञ्जलिः | |
| न्या. बि. | न्यायबिन्दुः | |
| न्या. म. | न्यायमञ्जरी | ( काशी सं ) |
| न्या. सू. | न्यायसूत्रम् | |
| न्या. सू. भा. | न्यायसूत्रवात्स्यायनभाष्यम् | |
| प. स्त. | पञ्चस्तवी | ( काव्यमाला गुः ३ ) |
| पा. | पाणिनिसूत्रम् | ( अष्टाध्यायी ) |
| पा. वा. | पाणिनिसूत्रवार्त्तिकम् | |
| पू. मी. सू. | पूर्वमीमांसासूत्राणि | |
| प्र. वा. | प्रमाणवार्त्तिकम् | ( राहुलसाङ्कृत्यायन सं ) |
| बा. भा. | बालभारतम् | ( राजशेखरकृतम् ) |
| बा. रा. | बालरामायणम् | |
| बृ. दे. | बृहद्देशी | ( अनन्तशयनसं ) |
| भ. का. | भट्टिकाव्यम् | |
| भ. श. | भल्लटशतकम् | ( काव्यमाला गुः ४ ) |
| भा. का. अ. | भामहकाव्यालङ्कारः | |
| भा. वि. | भामहविवरणम् | ( का. अ. सा. सं. ) |

| सङ्केतः | ग्रन्थनाम | संस्करणम् |
|---|---|---|
| म. ना. | महानाटकम् | |
| म. भा. | महाभारतम् | ( चित्रशाला सं ) |
| म. भाष्य. | महाभाष्यम् | |
| म. वी. च. | महावीरचरितम् | |
| मा. मा. | मालतीमाधवम् | |
| मा. सं. | माणिक्यचन्द्रकृतसङ्केतः | ( आनन्दाश्रम सं ) |
| मी. सू. | मीमांसासूत्रम् | |
| मृ. श. | मृच्छकटिकम् | |
| मे. दू. | मेघदूतम् | |
| " पू. | ,, पूर्वमेघ | |
| " उ. | ,, उत्तरमेघ | |
| यो. सू. | योगसूत्रम् | ( पातञ्जलम् ) |
| यो. सू. भाः | व्यासभाष्यम् | |
| ... त. वै— | ...तत्त्ववैशारदी | |
| र. अ.— | रसार्णवालङ्कारः | ( I. H. Q. vol. v. ) |
| र. ग. | रसगङ्गाधरः | |
| र. वं. | रघुवंशम् | |
| रत्ना. | रत्नावली | |
| रा. | रामायणम् | |
| रा. अ. | रामाभ्युदयम् | |
| रा. आ. | राघवानन्दम् | |
| रा. च. | रामचरितम् | ( अभिनन्दकृतम् ) ( वडोदा सं ) |
| रु. का. अ. | रुद्रटकाव्यालङ्कारः | |
| ,, ,, ,, न. सा. | नमिसाधुटीका | ( काव्यमाला सं ) |
| रु. सं. | रुचककृतकाव्यप्रकाशसङ्केतः | ( Cal. Or. J ). |
| ल. अ. सू. | लङ्कावतारसूत्रम् | ( तोकिओ सं ) |
| व. जी. | वक्रोक्तिजीवितम् | ( द्वितीयसं ) |
| व. ल. | वज्जलग्गा | ( आसियातिक सोसाइटी सं ) |

| सङ्केतः | ग्रन्थनाम | संस्करणम् |
|---|---|---|
| वा. का. अ. | वाग्भटकाव्यालङ्कारः | |
| वा. द. | वासवदत्ता | |
| वा. प. | वाक्यपदीयम् | ( काशी सं ) |
| वा. प. टो | वाक्यपदीयव्याख्यानम् | ( पुञ्जराजकृतम् ) |
| वि. उ. | विक्रमोर्वशीयम् | |
| वि. का. | विल्हणकाव्यम् | ( काव्यमाला १३ गुः ) |
| वि. पु. | विष्णुपुराणम् | ( भिजियानाग्राम सं ) |
| वि. वा. ली. | विषमबाणलीला | |
| वि. शा. भ. | विद्धशालभञ्जिका | |
| वे, सः | वेणीसंहारम् | |
| वै. श. | वैराग्यशतकम् | |
| वै. सू:. | वैशेषिकसूत्रम् | |
| व्य. वि. | व्यक्तिविवेकः | ( काशी सं ) |
| व्य. वि. व्या, | व्यक्तिविवेकव्याख्यानम् | ( रुचककृतम्, काशी. सं ) |
| श. भा. | शबरभाष्यम् | |
| श. व्या. वि. | शब्दव्यापारविचारः | |
| शि. पा. व. | शिशुपालवधम् | |
| शृ. ति. | शृङ्गारतिलकम् | ( काव्यमाला ३ गुः ) |
| शृ. प्र. | शृङ्गारप्रकाशः | |
| शृ. श. | शृङ्गारशतकम् | |
| श्री. स्त. | श्रीकण्ठस्तवः | |
| श्लो. वा. | श्लोकवार्त्तिकम् | |
| स. क. आ. | सरस्वतीकण्ठाभरणम् | ( निर्णयसागरसं ) |
| ... र. द. | रत्नेश्वरटीका रत्नदर्पणम् | ” |
| स. ती— | सरस्वतीतीर्थकृतकाव्यप्रकाशटीका | (B.O.R.I.Mss. 32) |
| स. र. आ. | सङ्गीतरत्नाकरः | (Adyar edn.) |
| स. ली. | सहृदयलीला | ( काव्यमाला गुः ५ ) |
| सा. का. | सांख्यकारिका | |

| सङ्केतः | ग्रन्थनाम | संस्करणम् |
|---|---|---|
| सा. द. | साहित्यदर्पणम् | |
| सि. हे. | सिद्धहेमचन्द्रम् | |
| सू. श. | सूर्यशतकम् | ( काव्यमाला ) |
| ह. च. | हर्षचरितम् | |
| ह. प्र. | हरिप्रबोधम् | |
| ह. व. | हयग्रीववधम् | |
| ह. वि. | हरविजयम् | |
| हे. का. अ. | हेमचन्द्रकृतकाव्यानुशासनम् | |
| ... ... वि. | ,, काव्यानुशासनविवेकः । | |

उः—उद्धृतिः, द्रः—द्रष्टव्यम्, श्लोः श्लोकः ।

---

# ERRATA

| Page | Line | For | Read |
|---|---|---|---|
| xxxvii | 10 | sevaral | several |
| xlii | 20 | nearer to | nearer to that of |
| 8 | (Fn.)2 | चतुर्थोद्योते | चतुर्थोद्द्योते |
| 10 | 21 | एवञ्चा | एवञ्च |
| 14 | 14 | प्रधानरूपं | प्रधानभूतं |
| 28 | 14 | चेन्, न | चेत्, न |
| 32 | (Fn.)4 | यथा | यद्वा |
| 37 | 10 | [ ] | ( ) |
| 40 | 25 | ( अ. वु. मा ) | ( अ. वृ. मा ) |
| 58 | 5 | ( ) | [ ] |
| 59 | 24 | ( द्यं ) | ( द्ये ) |
| 60 | 22 | वाघितत्वात् | वाधितत्वात् |
| 62 | 25 | ०दुन्मज्जनिमज्ज० | ०दुन्मज्जन्निमज्ज० |
| 63 | (Fn.)8 | वदवे | वदेव |
| 63 | (Fn.)9 | ०श्रयनीय | ०श्रयणीय |
| 64 | 14 | ( उ. वा. च. ) | ( उ. रा. च. ) |
| 64 | (Fn.)5 | ( का. अ. सु. वृ. ) | ( का. अ. सू. वृ. ) |
| 71 | 15 | समानकालतां विना | समानकालभाविना |
| 85 | 15 | आक्षिप्तते | आक्षिप्यते |
| 90 | 7 | करित्वादयो | करत्वादयो |
| 105 | 11 | ( ह. वि ) | ( हर. वि. ) |
| 132 | 2 | णित्वा | णिश्रा |
| 136 | 20 | चारूत्व | चारुत्व |